एवं देशकालवयोजात्यादीनां वेषव्यवहारादि समुचितमेवोपनिबन्द्धव्यम् ।

देशकालवयोजात्यादीनामिति । तत्र जगज्जगदेकदेशाश्च देशः । द्यावापृथिव्यात्मकमेकं जगदित्येके यथा—

हलमगु बलस्यैकोऽनड्वान्हरस्य न लाङ्गलं
क्रमपरिमिता भूमिर्विष्णोर्न गौर्न च लाङ्गलम् ।
प्रभवति कृषिर्नाद्याप्येषां द्वितीयगवं विना
जगति सकले नैदग्दृष्टं दरिद्रकुटुम्बकम् ॥ २११ ॥

[ ]

दिवस्पृथिव्यौ द्वे जगतीत्यपरे । यथा—

रुणद्धि रोदसी चास्य यावत्कीर्तिरनश्वरी ।
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ॥ २१२ ॥

[ भामहालङ्कार. परि. १. श्लो. ७ ]

स्वर्गमर्त्य[1]पातालभेदात् त्रीणि जगन्तीत्यपरे । यथा—

त्वमेव देव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥ २१३ ॥

[ ]

तान्येव भूर्भुवः स्वः—इत्यन्ये । यथा—

नमस्त्रिभुवनाभोगभृतिखेदभरादिव ।
नागनाथाङ्कपर्यङ्कशायिने शार्ङ्गधन्विने ॥ २१४ ॥

[ ]

महर्जनस्तपः सत्यमित्येतैः सह सप्तेत्यपरे । यथा—

संस्तम्भिनी पृथुनितम्बतटैर्धरित्र्याः
संवाहिनी जलमुचां चलकेतुहस्तैः ।
हर्षस्य सप्तभुवनप्रथितोरुकीर्तेः
प्रासादपङ्क्तिरियमुच्छिखरा विभाति ॥ २१५ ॥

[ ]

तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दशेति केचित् । यथा—

---

1 C. मृत्यु

निरवधि च निराश्रयं च यस्य स्थितमनुवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ २१६ ॥

तानि सप्तभिः पातालैः सहैकविंशतिरिति केचित् । यथा—

हरहास[1]हरावासहरहारनिभप्रभाः ।
कीर्तयस्तव लिम्पन्तु भुवनान्येकविंशतिम् ॥ २१७ ॥

[ ]

सामान्यविवक्षा एकयति, विशेषविवक्षा त्वनेकयतीति सर्वमुपपन्नम् । तत्र भूर्लोकः पृथ्वी, तत्र च सप्त महाद्वीपाः ।

(57) जम्बूद्वीपः सर्वमध्ये ततश्च प्लक्षो नाम्ना शाल्मलोऽतः कुशोऽतः[2] ।
क्रौञ्चः शाकः पुष्करश्चेत्यथैषां बाह्याऽबाह्या संस्थितिर्मण्डलीभिः ॥
लावणो रसमयः सुरोदकः सार्पिषो दधिजलः पयःपयाः ।
स्वादुवारिरुदधिश्च सप्तमस्तान्परीत्य त इमे व्यवस्थिताः ॥

एक एवायं लावणः समुद्र इत्येके । तदाहुः—

द्वीपान्यष्टादशात्र क्षितिरपि नवभिर्विस्तृता स्वाङ्गखण्डै-
रेकोऽम्भोधिर्दिगन्तप्रसृमरसलिलः प्राज्यमेतत्सुराज्यम् ।
कस्मिन्नप्याजिकेलिव्यतिकरविजयोपार्जिते वीरवर्ये
पर्याप्तं मे न दातुस्तदिदमिति धिया वेधसे यश्चुकोप ॥२१८॥

[ ]

त्रय इत्यन्ये । यथा—

आकम्पितक्षितिभृता महता निकामं
हेलाभिभूतजलधित्रितयेन यस्य ।
वीर्येण संहतिभिदा विहितोन्नतेन
कल्पान्तकालविसृतः पवनोऽनुचक्रे ॥ २१९ ॥

[ ]

चत्वार इत्यपरे । यथा—

चतुःसमुद्रवेलोर्मिरचितैकावलीलतम् ।
मेरुमप्यद्रिमुल्लङ्घ्य यस्य क्वापि गतं यशः ॥ २२०

[

1 A. °हासहास° 2. A. B. कुसो

सप्तेत्यन्ये । यथा—

अगस्त्यचुलुकोत्क्षिप्तसप्तवारिधिवारिणि ।
मुहूर्तं केशवेनापि तरता पूतरायितम् ॥ २२१ ॥

[                    ]

कविप्रसिद्ध्या वा विमृष्टपरमार्थं सर्वमुपपन्नम् ।

मध्ये जम्बूद्वीपमाद्यो गिरीणां मेरुर्नाम्ना काञ्चनः शैलराजः ।
यो मूर्तानामौषधीनां निधानं यश्चावासः सर्ववृन्दारकाणाम् ॥२२२॥

[                    ]

तमेनमवधीकृत्य ब्रह्मणा पुण्यकर्मणा ।
तिर्यगूर्ध्वमधस्ताच्च विश्वस्य रचना कृता ॥ २२३ ॥

मेरोश्चतुर्दिशमिलावृतं वर्षम् । तत्रोत्तरेण त्रयो वर्षगिरयः । नीलः श्वेतः शृङ्गवाँश्च । रम्यकं हिरण्मयमुत्तराः कुरव इति च क्रमेण त्रीणि तेषां वर्षाणि । दक्षिणेनापि त्रय एव । निषधो हेमकूटो हिमवाँश्च । हरिवर्षं किंपुरुषं भारतमिति त्रीणि वर्षाणि । तत्रेदं भारतं वर्षमन्त्यम् । अस्य च नव भेदाः— इन्द्रद्वीपः कसेरुमाँस्ताम्रपर्णो गभस्तिमान् नगद्वीपः सौम्यो गन्धर्वो वरुणः कुमारीद्वीपश्च । पञ्च शतानि जलं, पञ्च स्थलमिति विभागेन प्रत्येकं योजनसहस्रावधयो दक्षिणात्समुद्राद्धिमवन्तं यावत् परस्परमगम्यास्ते । तान्येतानि यो जयति स सम्राडित्युच्यते । कुमारीपुरात्प्रभृति बिन्दुसरोऽवधि योजनानां दशशती चक्रवर्तिक्षेत्रम् । तां विजयमानश्चक्रवर्ती भवति । चक्रवर्तिचिह्नानि तु—

(58) चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।
प्रोक्तानि सप्त रत्नानि सर्वेषां चक्रवर्तिनाम् ॥

[                    ]

कुमारीद्वीपे च—

(59) विन्ध्यश्च पारियात्रश्च शुक्तिमानृक्षपर्वतः ।
महेन्द्रसह्यमलयाः सप्तैते कुलपर्वताः ॥

[                    ]

तत्र विन्ध्यादयः प्रतीतस्वरूपाः । मलयविशेषास्तु चत्वारः । तेषु प्रथमो यथा—

आमूलयष्टेः फणिवेष्टितानां सचन्दनानां जननन्दनानाम् ।
कक्कोलकैलामरिचैर्वृतानां जातीतरूणां च स जन्मभूमिः ॥२२४॥

[                    ]

द्वितीयः—

यस्योत्तमां मौक्तिककामधेनुरपत्यकामर्चति ताम्रपर्णी ।
रत्नेश्वरो रत्नमहानिधानं कुम्भोद्भवस्तं मलयं पुनाति ॥ २२५ ॥
[ ]

तत्र द्रुमा विद्रुमनामधेया वंशेषु मुक्ताफलजन्म तत्र ।
मदोत्कटैः केसरिकण्ठनादैः स्फुटन्ति तस्मिन् घनसारवृक्षाः ॥२२६॥
[ ]

तृतीयः—

विलासभूमिः सकलामराणां पदं नृणां गौर्मुनिपुङ्गवस्य ।
सदा फलैः पुष्पलतावितानैराश्चर्यमूलं मलयः स तत्र ॥ २२७ ॥
[ ]

सा तत्र चामीकररत्नचित्रैः प्रासादमालावलभीविटङ्कैः ।
द्वारार्गलाबद्धसुरेश्वराङ्का लङ्केति या रावणराजधानी ॥ २२८ ॥
[ ]

प्रवर्तते कोकिलनादहेतुः पुष्पप्रसूः पञ्चमजन्मदायी ।
तेभ्यश्चतुर्भ्योऽपि वसन्तमित्रमुदङ्मुखो दक्षिणमातरिश्वा ॥२२९॥
[ ]

पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तरमार्यावर्तः । तस्मिंश्चातुर्वर्ण्यं चातुराश्रम्यं च । तन्मूलश्च सदाचारः । तत्रत्यो[1] व्यवहारः प्रायेण कवीनाम् । तत्र वाराणस्याः पुरतः[2] पूर्वदेशः । यत्राङ्गकलिङ्गकोसलतोसलोत्कलमगधमुद्गरकविदेहनेपालपुण्ड्रप्राग्ज्योतिषताम्रलिप्तकमलद[3]मल्लवर्तकसुह्मब्रह्मोत्तरप्रभृतया जनपदाः । बृहद्गृहलोहित[4]गिरिचकोरदर्दुरनेपालकामरूपादयः पर्वताः । शोणलौहित्यौ नद्यौ[5] । गङ्गाकरतोयाकपिशाद्याश्च नद्यः । लवलीग्रन्थिपर्णिकागुरुद्राक्षाकस्तूरिकादीनामुत्पादः । माहिष्मत्याः पुरतो[6] दक्षिणापथः । यत्र महाराष्ट्रमाहिष्मकाश्मक[7]वैदर्भकुन्तल[8]क्रथकैशिक[9]सूर्पारककाञ्चीकेरल[10]कावेर[11]मुरलवानवासक[12]सिंहलचोड[13]दण्डक[14]पाण्ड्यपल्लवगाङ्गना-

1. A. B. तत्र यो 2. C. परतः 3. C. °कमलज° 4. A. B. लोहितारि° C. N. लोहितगिर°. I have emended the r C. °त्यौ नद्यौ. 6. C. पतो ( for परतो ) 7.
8. C. कुन्तल° 9. A. कौशिक. 10. C किरलि°
12. B. °लवासकंसिहल° 13. C. चोष 14.

सिक्यकोङ्कण[1]कोल्लगिरिवेल्लरप्रभृतयो जनपदाः । विन्ध्यदक्षिणपादमहेन्द्र[2]मलयमेकल-पालमञ्जरसह्यश्रीपर्वतादयः पर्वताः । नर्मदातापीपयोष्णीगोदावरीकावेरी[3]भैमरथी[4]वेणीकृष्णवेणी[5]वञ्जुरातुङ्गभद्राताम्रपर्ण्युपलावती[6]रावणगङ्गाद्या नद्यः । तदुत्पत्तिर्मल-योत्पत्त्या व्याख्याता ।

देवसभायाः परतः पश्चाद्देशः । तत्र देवसभसुराष्ट्रदशेरकत्रवणभृगुकच्छ- 1
कच्छीयानर्तार्बुदब्राह्मणवाहयवनप्रभृतयो जनपदाः । गोवर्धनगिरिनगरदेवसभ[7]-माल्यशिखरार्बुदादयः पर्वताः । सरस्वतीश्वभ्रवतीवार्तघ्नीमहीहिडिम्बाद्या नद्यः । करीरपीलुगुग्गुलुखर्जूरकरभादीनामुत्पादः ।

पृथूदकात्परत उत्तरापथः—यत्र शककेकयवोक्काणहूण[8]वनायुजकाम्बोजवाह्लीक-
बह्लवलम्पाककुलूतकीरतङ्गणतुषारतुरुष्कबर्बरहरहूरहूहुकसहुडहंसमार्गरमठकरकण्ठप्रभृ- १
तयो जनपदाः । हिमालयजालन्धरकलिन्देन्द्रकीलचन्द्राचलादयः पर्वताः । गङ्गासिन्धुसरस्वतीशतद्रुचन्द्रभागायमुनैरावतीवितस्ताविपाशाकुहूदेविकाद्या नद्यः । सरलदेवदारुद्राक्षाकुङ्कुमचमराजिनसौवीरस्रोतोञ्जनसैन्धववैडूर्यतुरगाणामुत्पादः । तेषां मध्ये मध्यदेश इति कविव्यवहार इति । यदाहुः—

(59) हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । १
प्रत्यगेव प्रयागाच्च मध्यदेशः स कीर्तितः ॥

[ म. स्मृ. अ. २ श्लो. २१ ]

तत्र ये देशाः पर्वताः सरितो द्रव्याणामुत्पादश्च तत्प्रसिद्धिसिद्धमिति न निर्दिष्टम् ।

(60) द्वीपान्तराणां ये देशाः पर्वताः सरितस्तथा । २
नातिप्रयोज्याः कविभिरिति गाढं न चिन्तिताः ॥

विनशनप्रयागयोर्गङ्गायमुनयोश्चान्तरमन्तर्वेदी । तदपेक्षया दिशो विभजेतेति केचित् । वयं तु ब्रूमः—तत्राऽपि महोदयमूलमवधीकृत्य दिशो विभजेत । प्राच्यवाचीप्रतीच्युदीची च चतस्रो दिश इत्येके । यथा—

---

1 A. °कौल्ल° B. कोल्ल° C. °कोल्लारप्रभृतयो 2 B. पादहेन्द्र. N. माहेन्द्र 3 B. omit कावेरी 4. A. B. °रथी 5. C. omits कृष्णवेणी 6. A. B. °पर्ण्यपला° N. °णीपला° 7. C. °माल° 8. C omits हूण

चतसृष्वपि दिक्षु रणे द्विषतः प्रति येन चित्रचरितेन ।
विहितमपूर्वमदक्षिणमपश्चिममनुत्तरं कर्म ॥ २३० ॥
[ ]

ऐन्द्र्याग्नेयी याम्या नैर्ऋती वारुणी वायव्या कौबेर्यैशानी चाष्टौ दिश इत्यन्ये । यथा—

एकं[1] ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-
र्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।
युष्माकं तानि सप्त त्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानो-
र्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितीनां शतानि ॥२३१
[ सू. श. श्लो. ११. ]

ब्राह्मी नागीया च द्वे, ताभ्यां सह दशेत्यपरे । यथा—

दशदिक्कूटपर्यन्तसीमसंकटभूमिके ।
विषमा स्थूललक्षस्य ब्रह्माण्डग्रामके स्थितिः ॥ २३२ ॥
[ ]

सर्वमस्तु । विवक्षा परतन्त्रा हि दिशामियत्ता । तत्र चित्रास्वात्यन्तरे प्राची तदनुसारेण[2] प्रतीची । ध्रुवेणोदीची, तदनुसारेणापाची[3] । अन्तरेषु विदिशः । ऊर्ध्वं ब्राह्मी । अधस्तान्नागीयेति । द्विधा च दिग्व्यवहारः कवीनां प्राक् सिद्धो विशिष्टस्थानावधिसाध्यश्च । तत्र प्राक् सिद्धे प्राची—

द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकै-
र्ज्योत्स्नापानभरालसेन वपुषा सुप्ताश्चकोराङ्गनाः ।
यातोऽस्ताचलचूलमुद्रसमधुच्छत्रच्छविश्चन्द्रमाः
प्राची बालबिडाललोचनरुचां जाता च पात्रं ककुप्, ॥२३३॥
[ वि. शा. भ. अं. १ श्लो. ११ ]

दक्षिणा—

दक्षिणो दक्षिणामाशां यियासन् सोऽधिकं बभौ ।
जिहासन् दक्षिणामाशां भगवानिव भास्करः ॥ २३४ ॥
[ ]

पश्चिमा—

पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे विवस्वता ।
दीर्घया प्रतिमया सरोम्भसस्तापनीयमिव सेतुबन्धनम्
[ कु. सं. स.

1. A. B. एकज्योति°  2. A. B. drop तद
3. A. B. प्राचीप्रतीच्यौ°

उत्तरा—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥२३६॥

[ कु. सं. स. १ श्लो. १. ]

विशिष्टस्थानावधौ तु दिग्विभागे पूर्वपश्चिमौ—

यादांसि ! हे भरत संगतगोत्रतन्त्रे पूर्वेण चन्दनगिरेरुत पश्चिमेन ।
नो चेन्निरन्तरधराधरसेतुसूतिराकल्पमेष न विरंस्यति वां वियोगः ॥२३७॥

[ बा. रा. अ. ७. श्लो. ४७ ]

दक्षिणोत्तरौ यथा—

काञ्चयाः पुरो दक्षिणदिग्विभागे तथोत्तरस्यां दिशि वारिराशेः । १
कर्णान्तचक्रीकृतपुष्पचापो रत्या समं साधु वसत्यनङ्गः ॥ २३८ ॥

[ ]

उत्तरादावप्युत्तरदिगभिधानमनुत्तरादावप्युत्तरदिगभिधानं च । तयोः प्रथमम्—

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयम्
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन । १
यस्योद्याने कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तवकविनतो बालमन्दारवृक्षः ॥ २३९ ॥

[ मे. दृ उ. श्लो. १२ ]

द्वितीयम्—

सह्याद्रेरुत्तरे भागे यत्र गोदावरी नदी । २
पृथिव्यामिह कृतस्नायां स प्रदेशो मनोरमः ॥ २४० ॥

एवं दिगन्तरेष्वपि । तत्र देशपर्वतनद्यादीनां दिशां च यः क्रमस्तं तथैव निबध्नीयात् । साधारणं तूभयत्र लोकप्रसिद्धितश्च ।

तद्वद्वर्णनियमः । तत्र प्राच्यानां श्यामो वर्णः—

श्यामेष्वङ्गेषु गौडीनां सूत्रहारैकहारिषु । २
चक्रीकृत्य धनुः पौष्पमनङ्गो वल्गु वल्गति ॥ २४१ ॥

दाक्षिणात्यानां कृष्णो यथा—

इदं भासां भर्तुर्द्रुतकनकगोलप्रतिकृति-[2]
क्रमान्मन्दज्योतिर्गलति नभसो बिम्बवलयम् ।

1. A. C. drops वल्गु 2. A. drops कृति C. प्रतिक्षति

अथैषः प्राचीतः सरति मुरलीगण्डमलीन-
स्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तविसरः ॥३४२॥

[ ]

पाश्चात्यानां पाण्डुर्यथा—

शाखास्मेर मधुकवलनाकेलिलोलेक्षणानां
भृङ्गस्त्रीणां बकुलमुकुलं कुन्तलीभावमेति ।
किं चेदानीं यवनतरुणीपाण्डुगण्डस्थलीभ्यः
कान्तिः स्तोकं रचयति पदं नागवल्लीदलेषु ॥ ३४३ ॥

[ ]

उदीच्यानां गौरो यथा—

काश्मीरीगात्रलेखासु लोलल्लावण्यवीचिषु ।
द्रावयित्वेव विन्यस्तं स्वर्णं षोडशवर्णिकम् ॥ ३४४ ॥

[ ]

मध्यदेश्यानां कृष्णः श्यामो गौरश्च । कृष्णो यथा—

युधिष्ठिरक्रोधवह्नेः कुरुवंशैकदाहिनः ।
पाञ्चालीं ददृशुः सर्वे कृष्णां धूमशिखामिव ॥ ३४५ ॥

[ ]

एवं श्यामोऽपि । न च कविमार्गे कृष्णश्यामयोः [1]पाण्डुगौरयोर्वा महान् विशेष इति । गौरो यथा—

तव नव[2]नवनीतपिण्डगौरे प्रतिफलदुत्तरकोसलेन्द्रपुत्रि ।
अवगतमलिके मृगाङ्कबिम्बं मृगमदपत्रनिभेन लाञ्छनेन ॥३४६॥

[ ]

विशेषस्तु पूर्वदेशराजपुत्र्यादीनां गौरः पाण्डुर्वा वर्णः—

कपोले जानक्याः करिकलभदन्त[3]द्युतिमुषि
[4]स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ्छृण्वन् रजनिचरसेनाकलकलम्
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥ २३७ '

[ ह. ना. अ

1. A. B. C. पाण्ड 2. A. drops नवनव C. d
3. C. मुख 4. A. B. सारस्मेरं C. स्मेरस्मेरं

यथा च—

तासां माधवपत्नीनां सर्वासां चन्द्रवर्चसाम् ।
शब्दविद्येव विद्यानां मध्ये जज्वाल रुक्मिणी ॥ २४८ ॥

[ ]

एवमन्यदपि यथासंभवमभ्यूह्यम् ॥

कालः काष्ठादिभेदभिन्नः । तथा च—

(61) काष्ठा निमेषा दश पञ्च चैव त्रिंशच्च काष्ठाः कथिताः कला तु ।
त्रिंशत्कलश्चैव भवेन्मुहूर्तस्तैस्त्रिंशता रात्र्यहनी समेते ॥

ते च चैत्राश्वयुजमासयोर्भवतः । चैत्रात्परं प्रतिमासं मौहूर्तिकी दिवसवृद्धिर्निशाहानिश्च त्रिमास्याः । ततः परं मौहूर्तिकी निशावृद्धिर्दिवसहानिश्च । आश्वयुजात्परतः पुनरेतदेव विपरीतम् । राशितो राश्यन्तरसंक्रमणमुष्णभासो मासः । वर्षादि दक्षिणायनम् । शिशिराद्युत्तरायणम् । द्व्ययनः संवत्सर इति सौरं मानम् । पञ्चदशाहोरात्रः पक्षः । वर्धमानसोमशुक्लिमा शुक्लः, वर्धमानसोमकृष्णिमा कृष्ण इति पित्र्यं मासमानम् । अधुना च वेदोदितः कृत्स्नोऽपि क्रियाकल्पः । पित्र्यमेव व्यत्ययितपक्षं चान्द्रमसम् । इदमार्यावर्तवासिनः कवयश्च मानमाश्रिताः । एवं द्वौ पक्षौ मासः । द्वौ मासावृतुः । षण्णामृतूनां परिवर्तः संवत्सरः । स च चैत्रादिरिति **दैवज्ञाः** । श्रावणादिरिति **लोकयात्राविदः** । तत्र नभानभस्यश्च वर्षाः । यथा—

गर्भान् बलाकासु निवेशयन्तो वंशाङ्कुरान् स्वैर्निनदैः सृजन्तः ।
रजोऽम्बुदाः प्रावृषि मुद्रयन्तो यात्रोद्यमं भूमिभृतां हरन्ति ॥२४९॥

[ ]

मशल्लकीशालशिलीन्ध्रयूथीप्रसूनदः पुष्पितलाङ्गलीकः ।
दग्धोर्वरासुन्दरगन्धबन्धुरर्गन्त्यय वारिमुचामनेहा ॥ २५० ॥

[ ]

वनानि नीलीदलमेचकानि धाराम्बुधौता गिरयः स्फुरन्ति ।
पूराम्भसा भिन्नतटास्तटिन्यः सान्द्रेन्द्रगोपानि च शाद्वलानि ॥२५१॥

[ ]

चकोरहर्षी यतिचारचौरो वियोगिनीवीक्षितनाथवर्त्मा ।
गृहान्प्रति प्रस्थितपान्थसार्थः कालोऽयमाध्मातनभाः पयोदैः ॥२५२॥

[ ]

या केलियात्रा किल कामिनीभिर्या तुङ्गहर्म्याग्रविलासशय्या ।
चतुःसमं यन्मृगनाभिगर्भं सा वारिदर्तोः प्रथमातिथेयी ॥२५३॥

[ ]

चलच्चटुलचातकः कृतकुरङ्गरागोदयः
सदर्दुररवोद्यमो मदभरप्रगल्भोरगः ।
शिखण्डिकुलताण्डवामुदितमद्गुकङ्काह्वयो
वियोगिषु घनागमः स्मरविषं विषं मुञ्चति ॥ २५४ ॥

[ ]

दलत्कुटजकुड्मलः स्फुटितनीपपुष्पोत्करो
नवप्रसवबान्धवः प्रचितमञ्जरीकार्जुनः ।
कदम्बकलुषाम्बरः कलितकेतकीकोरक-
श्चलन्निचुलसंचयो हरति हन्त घर्मात्ययः ॥ २५५ ॥

[ ]

तत्र पाश्चात्यः पौरस्त्यो वा वायुरिति कविसमयः । यथा—

[1]प्रावृष्यम्भोभृताम्भोदभरनिर्भरमम्बरम् ।
कदम्बकुसुमामोदा वायवो वान्ति वारुणाः ॥ २५६ ॥

[ ]

यथा च—

पौरस्त्यस्तोयदर्तोः पवन इव पतत्पावकस्येव धूमो
विश्वस्येवादिसर्गः प्रणव इव परं पावनं वेदराशेः ।
सन्ध्यानृत्तोत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः
सौरस्याग्रे मुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥२५७॥

[ सू. श. श्लो. ५५. ]

इष ऊर्जश्च शरत् । यथा—

[2]प्रोन्मादयन्ती विमदान्मयूरान्प्रगल्भयन्ती कुररद्विरेफान्
शरत्समभ्येति विकास्य पद्मानुन्मीलयन्ती कुमुदोत्पलानि ॥२५८॥
सा भाति पुष्पाणि विशेषयन्ती बन्धूकबाणासनकुङ्कुमेषु ।
[3]शेफालिकासप्तपलाशकाशभाण्डीरसौगन्धिकमालतीषु ॥२५

[

1. A. प्रावृष्याम्भो°. 2. B. °न्मोद°. C °न्मुद°

from लिका to कारण्डव

सखञ्जरीटा सपय:प्रसादा सा कस्य नो मानसमाच्छिनत्ति ।
कादम्बकारण्डवचक्रवाकससारसक्रौञ्चकुलानुयाता ॥ २६० ॥
[ ]

उपानयन्ती कलहंसयूथमगस्तिदृष्टया पुनती पयांसि ।
मुक्तासु शुभ्रं दधती च गर्भं शरद्विचित्रैश्चरितैश्चकास्ति ॥२६१॥
[ ]

क्षिति खनन्तो वृषभाः खुराग्रे रोधा विषाणैर्द्विरदा रदन्तः ।
शृङ्गं त्यजन्तो रुरवश्च जीर्णं कुर्वन्ति लोकानवलोकनोत्कान् ॥२६२॥
[ ]

अत्रावदातद्युति चन्द्रिकाम्बु नीलावभासं च नभः समन्तात् ।
सुरेभवीथी दिवि सावनारा [1]जीर्णाभ्रखण्डानि च पाण्डुराणि ॥२६३॥
[ ]

महानवम्यां निखिलास्त्रपूजा नीराजना वाजिभटद्विपानाम्
दीपालिकायां विविधा विलासा यात्रोन्मुखैरत्र नृपैर्विधेया ॥२६४॥
[ ]

व्योम तारतर[2]तारकोत्करं स्यन्दनप्रचरणक्षमा मही ।
भास्करः शरदि दीप्तदीधितिर्बुध्यते च सह माधवः सुरैः ॥२६५॥
[ ]

केदार एव कलमाः परिणामनम्राः प्राचीनमामलकमर्पयति पाकनीलम् ।
एर्वारुकं स्फुटनानिर्गतगर्भगन्धमम्लीभवन्ति च जरत्त्रपुसीफलानि ॥२६६॥
[ ]

गेहाजिरेषु नवशालिकणावपातगन्धानुभावसुभगेषु कृषीवलानाम् ।
[3]आनन्दयन्ति [4]मुसलोल्लसनावधूतपाणिस्खलद्वलयपद्धतयो वधूटयः॥ ॥२६७॥
[ ]

[5]तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः शृङ्गं रुरुस्त्यजति [6]मित्रमिवाकृतज्ञः । २५
तोयं प्रसीदति मुनेरिव [7]धर्मचिन्ता कामी दरिद्र इव शोषमुपैति मेघः॥२६८॥
[ सुभा. श्लो. १८२१ भासस्य ]

---

1. A. B. जीर्णाब्जख० 2. A. drops तर 3. C. आतक्षयन्ति.
4. A. drops लोल्लस 5. A. B. ताक्ष्° C तक्ष्णं. 6. A. drops मित्र.
7 N. धर्मचित्तं

नद्यो वहन्ति कुटिलक्रमयुक्तशुक्तिरेखाङ्कवालपुलिनोदरसुप्तकूर्माः ।
अस्यां तरङ्गिततनुतोयपलायमानमीनानुसारिबक[1]दन्तकरालफालाः ॥२६९॥

[ ]

अपङ्किलतटावटः शफरफाण्टफालोज्ज्वलः
पतत्कुररकातरभ्रमदभ्रमीनार्भकः ।
लुठत्कमठसैकतश्चलबकोटवाचाटितः
सरित्सलिलसंचयः शरदि मेदुरः सीदति ॥ २७० ॥

[ ]

वायुश्चात्रानियतदिक्कः । यथा—

उषःसु बहुराकृष्टजडावश्यायशीकराः ।
शेफालीकलिकाकोशकषायामोदिनोऽनिलाः ॥ २७१ ॥

[ ]

सहाः सहस्यश्च हेमन्तः । यथा—

द्वित्रमुचुकुन्दकलिकस्त्रिचतुरमुकुलः क्रमेण लवलीषु ।
पञ्चषफलिनीकुसुमो जयति हिमर्तुर्नवावतारः ॥ २७२ ॥

[ ]

पुन्नागरोध्रप्रसवावतंसाः वामभ्रुवः कञ्चुककुञ्चिताङ्गाः ।
वक्त्रोल्लसत्कुङ्कुमसिक्थकाढ्याः सगन्धतैलाः कबरीर्वहन्ति ॥२७३॥

[ ]

यथा यथा पुष्यति शीतकालस्तुषारचूर्णोत्करकीर्णवातः ।
तथा तथा यौवनशालिनीनां कवोष्णतामत्र कुचा लभन्ते ॥२७४॥

[ ]

वराहवध्राणि नवौदनानि दधीनि संनद्धरसानि चात्र ।
सुकोमलाः सर्षपकन्दलीश्च भुक्त्वा जनो निन्दति वैद्यविद्याम् ॥२७५॥

[ ]

अत्रोपचारः सलिलैः कवोष्णैर्यत्किंचिदत्र स्वदतेऽन्नपानम् ।
सुदुर्भगामत्र निपीड्य शेते स्वस्त्यस्तु नित्यं [2]तुहिनर्तवेऽस्मै

[

1. C. दन्त    2. N. तु हिमर्तवे

विमुक्तबर्हा विमदा मयूराः प्ररूढगोधूमयवा च सीमा ।
व्याघ्रीप्रसूतिः सलिलं सबाष्पं हेमन्तलिङ्गानि जयन्त्यमूनि ॥२७७॥
[ ]

सशमीधान्यपाकानि क्षेत्राण्यत्र हरन्ति च ।
त्रिशङ्कुतिलका रात्र्यः पच्यन्ते लवणानि च ॥ २७८ ॥
[ ]

उद्यानानां मूकपुंस्कोकिलत्वं भृङ्गस्त्रीणां मौनमुद्रा[1] मुखेषु ।
मन्दोद्योगा पत्त्रिणां व्योमयात्रा हेमन्ते स्यात्सर्पदर्पक्षयश्च ॥२७९॥
[ ]

कर्कन्धूनां नागरङ्गीफलानां पाकोद्रेकः खाण्डवोऽप्याविरस्ति ।
कृष्णेक्षूणां पुण्ड्रकाणां च गर्भे माधुर्यश्रीर्जायते काप्यपूर्वा ॥२८०॥
येषां मध्येमन्दिरं तल्पसम्पत् पार्श्वे दाराः स्फारतारुण्यताराः ।
लीलावह्निर्निह्नुतोद्दामधूमस्ते हेमन्तं ग्रीष्मशेषं विदन्ति[2] ॥२८१॥

वायुरत्रोदीच्यः पाश्चात्यो वा । यथा—

लम्पाकीनां किरन्तश्चिकुरविरचनां लङ्कोल्लासयन्त-
श्चुम्बन्तश्चन्द्रभागां विचितसुमनसः कुङ्कुमान्कम्पयन्तः ।
एते कस्तूरिकैणप्रणयसुरभयो वल्लभा बाह्वीनां
कौलूताकेलिकाराः परिचयितहिमं वायवो वान्त्युदीच्याः ॥२८२॥
[ बा. रा. अं. ५ श्लो. ३५ ]

यथा च—

भजन् भूर्जद्रुमालीस्तुहिनगिरितटेषूद्धतत्वक्कराला-
रेवाम्भः स्थूलवीचीचयचकितचलच्चातकं व्याधुनानः ।
पाश्चात्यो वाति वेगाद् द्रुततुहिनशिलाशीकरासारवर्षं
मातङ्गक्षुण्णसान्द्रस्रुतसरलसरत्सारसारी[3] समीरः ॥ २८३ ॥
[ ]

तपस्तपस्यश्च शिशिरः । स च हेमन्तधर्म एव । विशेषस्तु—

रात्रिर्विचित्रसुरतोचितयामदीर्घा चण्डो मरुद् वहति कुङ्कुमपङ्कसाध्यः ।
तल्पस्थितिर्द्विगुणतूलपटा[4] किमन्यद्वर्धन्ति चात्र विततागुरुधूपधूमाः ॥२८४॥
[ ]

1. A. drops मुद्रा  2. C. वदन्ति  3. A drops सरत्सार
4. A. drops from कुङ्कुम to °स्थिति

आश्लेषिणः पृथुरतक्लमपीतशीतमायामिनीं घनमुदो रजनीं युवानः ।
ऊर्वोर्मुहुर्वलनबन्धनसन्धिलोलपादान्तसंवलिततूलपटाः स्वपन्ति ॥२८५॥

[ ]

पानेऽम्भसोः सुरसनीरसयोर्न[1] भाति स्पर्शक्रियासु तुहिनानलयोर्न चात्र ।
नो दुर्भगासुभगयोः परिरम्भणे वा नासेवने च शशिभास्करयोर्विशेषः ॥२८६॥

[ ]

पुष्पक्रिया मरुबके जलकेलिनिन्दा कुन्दान्यशेषकुसुमेषु धुरि स्थितानि ।
सौभाग्यमेणतिलकाद्व्रजतेऽर्कबिम्बं काले तुषारिणि दहन्ति च चन्दनानि ॥२८७॥

[ ]

सिद्धार्थयष्टिषु यथोत्तरहीयमानसन्तानभिन्नघनसूचि[2]परम्परासु ।
द्वित्रावशेषकुसुमासु जनिक्रमेण पाकक्रमः कपिशिमानमुपादधाति ॥२८८॥

[ ]

उदीच्यचण्डानिलताडितासु निलीनमीनासु जलस्य मूले ।
नालावशेषाब्जलतास्विदानीं विलासवापीषु न याति दृष्टिः ॥२८९॥

[ ]

माद्यन्मतङ्गः पृषतैकतोषी पुण्यद्रुराहो धृतिमल्लुलायः ।
दरिद्रनिन्द्यः सधनैकवन्द्यः स एष कालः शिशिरः कराल ॥२९०॥

[ ]

अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्ति निशाकरः ॥२९१॥

[ औ. वि. च. पृ. १२३ मालवरुद्रस्य, सु. हारावली भासस्य ]

स्त्रिय. प्रकृतिपित्तलाः क्वथितकुङ्कुमालेपनै-
र्नितम्बफलकस्तनस्थलभुजोरुमूलादिभिः ।
इहाभिनवयौवनाः सकलरात्रिसंश्लेषितै-
र्हरन्ति शिशिरज्वरा रतिमतीव पृथ्वीमपि ॥ २९२

[ ]

1. drops नीरस 2 A. B. सूचि, C. सूरि.

मधुर्माधवश्च वसन्तः । यथा—

चैत्रे मदर्धिः शुकसारिकाणां हारीतदात्यूहमधुव्रतानाम् ।
पुंस्कोकिलानां सहकारबन्धुर्मदस्य कालः पुनरेष एव ॥२९३॥
[ ]

मनोऽधिकं चात्र विलासलास्ये प्रेङ्खासु दोलासु च सुन्दरीणाम् ।
गीते च गौरीचरितावतंसे पूजाप्रपञ्चे च मनोभवस्य ॥२९४॥
[ ]

पुंस्कोकिलः कूजति पञ्चमेन बलाद्विलासा युवतेः स्फुरन्ति ।
स्मरो वसन्तेऽत्र नवैः प्रसूनैः स्वचापयष्टेर्घटनां करोति ॥२९५॥
[ ]

पिनद्धमाहारजनांशुकानां[1] सीमन्तसिन्दूरजुषां वसन्ते ।
स्मरीकृते प्रेयसि भक्तिभाजां विशेषवेषः स्वदते वधूनाम् ॥२९६॥
[ ]

अयं प्रसूनोद्धुरकर्णिकारः पुष्पप्रपञ्चाञ्चितकाञ्चनारः ।
विजृम्भणाकोविदकोविदारः[2] कालो विकासोद्धुरसिन्दुवारः[3] ॥२९७॥
[ ]

रोहितकाम्रातककिङ्कराता मधूकमोचाः सह माधवीभिः ।
जयन्ति शोभांजनकश्च शाखी सशेखरः पुष्पभरैर्वसन्तः ॥२९८॥
[ ]

यो माधवीमुकुलदृष्टिषु वेणिबन्धो
य: कोकिलाकलरुते कथने च लाभः ।
पूजाविधिर्दमनकेन च यः स्मरस्य
तस्मिन् मधुः स भगवान् गुरुरङ्गनानाम् ॥ २९९ ॥
[ ]

नालिङ्गितः कुरबकस्तिलको न दृष्टो
नो ताडितश्च चरणैः सुदृशामशोकः ।
सिक्तो न वक्त्रमधुना बकुलश्च चैत्रे
चित्रं तथापि भवति प्रसवावकीर्णः ॥ ३०० ॥
[ ]

चैत्रे चित्रौ रक्तनीलावशोकौ स्वर्णाशोकस्तत्तृतीयश्च पीतः ।
जैत्रं तन्त्रं तत्प्रसूनान्तरेभ्यश्चेतोयोनेर्भूर्भुवः स्वस्त्रयेऽपि ॥३०१॥
[ ]

1. N. रक्तांशुकानां. 2. A. drops कोविद 3. N. सोद्धुतसिन्धुवार:

गूवाकानां नालिकेरीद्रुमाणां हिन्तालानां पाटलीकिंशुकानाम् ।
खर्जूरीणां ताडताडीद्रुमाणां पुष्यापीडन्यासहेतुर्वसन्तः ॥३०२॥
[ ]

वायुश्चात्र दक्षिणः । यथा—

चुम्बन्कक्कोलवनालीर्मुहुरलकलता लासयन् केरलीना-
मन्ध्रीधम्मिल्लबन्धान् सपदि शिथिलयन् वेल्लयन्नागवल्लीः ।
उद्दामं दाक्षिणात्यो मलितमलयजः सारथिर्मीनकेतोः
प्राप्तः सीमन्तिनीनां मधुसमयसुहृन्मानचौरः समीरः ॥३०३॥
[ ]

शुक्रः शुचिश्च ग्रीष्मः । यथा—

विकासकारी नवमालिकानां दलच्छिरीषप्रसवाभिरामः[1] ।
पुष्पप्रदः काञ्चनकेतकीनां ग्रीष्मोऽयमुल्लासितधातुकीकः ॥३०४॥
[ ]

खर्जूरजम्बूपनसाम्रमोचप्रियालपूगीफलनालिकेरैः ।
द्वन्द्वानि खेदालसतामपास्य रतानुसन्धानमिहाद्रियन्ते ॥३०५॥
[ ]

स्रोतांस्यनम्भांसि सकूपकानि प्रपाः कठोरऽहनि पान्थपूर्णाः ।
शुचौ समभ्यर्चितसक्तुधाने प्रगे[2] च सायं च वहन्ति मार्गाः ॥३०६॥
[ ]

यत्क्वाथमानेषु दिनार्धनिद्रा यत्स्नानकेलिर्दिवसावसाने ।
यद्रात्रिशेषे सुरतावतारः स मुष्टियोगो घनघर्ममाथी ॥३०७॥
[ ]

या चन्द्रिका चन्दनपङ्कहृद्या या जालमार्गानिलवीचिमाला ।
या तालवृन्तोदबिन्दुवृष्टिर्जलाञ्जलिं सा शुचये ददाति ॥३०८॥
[ ]

कर्पूरचूर्णः सहकारभङ्गस्ताम्बूलमार्द्रक्रमुकोपक्लृप्तम् ।
हाराश्च तारास्तनुवस्त्रमेतन्महारहस्यं[3] शिशिरक्रियायाः ॥
[

मुक्तालताश्चन्दनपङ्कदिग्धा मृणालहारानुसृता जलार्द्र
स्रजश्च मौलौ स्मितचम्पकानां ग्रीष्मेऽपि सोऽयं शि-

1. A. B. °शिरीषप्रमदा 2. C. प्रागेव. 3. A. drop. ।९

अत्र हि—

पच्यन्त इव भूतानि ताप्यन्त इव पांसवः ।
क्वथ्यन्त इव तोयानि ध्मायन्त इव चाद्रयः ॥३११॥

एण्यः स्थलीषु मृगतृष्णिकया ह्रियन्ते
स्रोतस्तनुत्वजनिता जलवेणिबन्धाः ।
ताम्यत्तिमीनि च सरांसि जलस्य शोषाद्
बद्धारघट्टघटिकावलयाश्च[1] कूपाः ॥ ३१२ ॥

[ ]

करभाः शरभाः सरासभाः मदमायान्ति भजन्ति विक्रियाम् ।
करवीरकरीरपुष्पिणीः स्थलभूमीरधिरुह्य चासते ॥ ३१३ ॥

[ ]

सहकाररसार्चिता रसाला जलभक्तं फलपानकानि मन्थाः ।
मृगलावरसाः सृतं च दुग्धं स्मरसंजीवनमौषधं निदाघे ॥३१४॥

[ ]

जडचन्दनचारवस्तरुण्यः सजलार्द्रा सहतारहारमालाः ।
कदलीदलतल्पकल्पनस्थाः स्मरमाहूय निवेशयन्ति पार्श्वे ॥३१५॥

[ ]

ग्रीष्मे चीरीनादवन्तो वनान्ताः पङ्काभ्यक्ताः सैरिभाः सेभकोलाः ।
लोलज्जिह्वाः सर्वसारङ्गवर्गा मूलस्रस्तैः पत्रिणश्चांशदेशैः ॥३१६॥

हर्म्ये रम्यं चन्द्रिकाधौतपृष्ठं कान्तोच्छिष्टा वारुणी वारिमिश्रा ।
मालाः कण्ठे पाटला मल्लिकानां सद्यो ग्रीष्मं हन्त हेमन्तयन्ति ॥३१७॥

वायुश्चात्र नैर्ऋतोऽनियतदिक्को वा । यथा—

सोऽयं करैस्तपति वह्निमयैरिवार्कः साङ्गारविस्तारभरेव धरा समग्रा ।
वायुः कुकूलमिव वर्षति नैर्ऋतश्च कार्शानवैरिव शरैर्मदनश्च हन्ति ॥३१८॥

यथा च—

वात्याचक्रकचुम्बिताम्बरभुवः स्थूला रजोदण्डकाः
संभ्रान्ति भविष्यदभ्रपटलस्थूणावितर्कं नभः ।
किं चान्यन्मृगतृष्णिकाम्बुनिसरैः पात्राणि वीतार्णसां
सिन्धूनामिह सूचयन्ति दिवसेष्वागामिनीं सम्पदम् ॥३१९॥

[ ]

1. A. B. C. वलयश्च K. M. वलयाश्च

चतुरवस्थश्च ऋतुः । सन्धिः शैशवं प्रौढिरनुवृत्तिश्च । ऋतुद्वयमध्ये सन्धिः । स शिशिरवसन्तयोर्यथा—

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मनसि च गिरं ग्रथ्नन्तीमे किरन्ति न कोकिलाः ।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥ ३२० ॥

[ औ. वि. च. पृ. १४६. मालवकुवलयस्य ]

वसन्तस्य शैशवं यथा—

गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवाः
वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ।
किं च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥ ३२१ ॥

प्रौढिर्यथा—

साम्यं सम्प्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैः
कान्तिं कर्षति काञ्चनारकुसुमं माञ्जिष्ठधौतात् पटात् ।
हूणीनां कुरुते मधूकमुकुलं लावण्यलुण्टाकतां
लाटीनामिनिभं चकास्ति च पतद् वृन्ताग्रतः केसरम् ॥३२२॥

[ वि. शा. भ. अं. १ श्लो. २५ ]

(62) अतिक्रान्तर्तुलिङ्गं यत्कुसुमाद्यनुवर्तते ।
लिङ्गानुवृत्तिं तामाहुः सा ज्ञेया काव्यलोकतः ॥

[ ]

वर्षासु ग्रीष्मलिङ्गाब्जविकासानुवृत्तिः । यथा—

खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं
चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् ।
गन्धं चुम्बति सिक्तलाजसदृशी वर्षेण दग्धा स्थली
दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासां पतिः

किं च—

(63) ग्रैष्मिकसमयविकासी कथितो धूलीकदम्ब इति ल
जलधरसमयप्राप्तौ स एव धाराकदम्बः स्यात् ॥

[ ]

यथा—

धूलीकदम्बपरिधूसरदिङ्मुखस्य रक्तच्छटा[1]सुरशरासनमण्डनस्य ।

दीप्तायुधाशनिमुचो ननु नीलकण्ठ नोत्कण्ठसे समरवारिधरागमस्य ॥३२४॥

[ ]

जलसमयजायमानां जातिं यां कर्दमेन जनयन्ति ।

सा शरदि महोत्सविनी [2]गन्धान्वितषट्पदा भवन्ति ॥ ३२५[×] ॥

[ ]

यथा—

स्थूलावश्यायबिन्दुद्युतिदलितबृहत्कोरकग्रन्थिभाजो
जात्या जालं लतानां जरठपरिमलप्लावितानां जजृम्भे ।
नानाहंसोपधानं सपदि जलनिधेश्चोत्ससर्पापरस्य
ज्योत्स्नाशुक्लोपधानं शयनमिव शशी नागभोगाङ्कमम्भः ॥३२६॥

[ ]

स्तोकानुवृत्तिं केतक्या अपि केचिदिच्छन्ति । यथा—

असूच्यत शरत्कालः केतकीधूलिधूसरैः ।
पश्चाताम्रैर्नवायात चरणैरिव वासरैः ॥ ३२७ ॥

[ ]

(64) शरद्भवानामनुवृत्तिरत्र बाणासनानां सकुरण्टकानाम् ।
हेमन्तवक्त्रे यदि दृश्यतेऽपि न दृश्यते बन्धविधिः कवीनाम् ॥

[ ]

हेमन्तशिशिरयोरैक्ये सर्वलिङ्गानुवृत्तिरेव । उक्तं च—(65) द्वादशमासः संवत्सरः, पञ्चर्तवो हेमन्तशिशिरयोः समासेन ।

(66) मरुबकदमनकपुन्नागपुष्पलिङ्गानुवृत्तिभिः सुरभिः ।
रचनीयश्चित्रश्रीः किञ्चित्कुन्दानुवृत्त्या च ॥

[ ]

यथा—

गेहे वाहीकयूनां वहति दमनको मञ्जरीकर्णपूरान्
उन्मादः पामरीणां मरुति मरुबकामोदिनि व्यक्तिमेति ।

---

1. A. B. °हासशरासन° 2. A. B. गन्धान्वित × The readings of K. M. are correct: °कार्दमीति निगदन्ति । and °पदा भवति ॥

सद्यो [1]भञ्जानुसारस्नुतसुरभिशिशिराशीकरः साहकारः
सर्पिर्गम्भः शरावे रचयति च रसो रेवकीचक्रकाणि ॥३२८॥

[

यथा वा—

कुन्दे मन्दस्तमाले मुकुलिनि विकलः कातरः किंकिराते
रक्ताशोके सशोकश्चिरमतिविकचे चम्पके कुञ्चिताक्षः ।
पान्थः खेदालसोऽपि श्रवणकटुरटच्चक्रमभ्येति धुन्वन्
सोत्कण्ठः षट्पदानां नवमधुपटलीलम्पटं कर्पटेन ॥ ३२९ ॥

[

एवमन्याप्यनुवृत्तिः ।

(67) [2]विचकिलकेसरपाटलचम्पकपुष्पानुवृत्तयो ग्रीष्मे ।
तत्र च तुहिनर्तुभवं मरुवकमपि केचिदिच्छन्ति ॥

यथा—

अभिनवकुशसूचिस्पर्धि कर्णे शिरीषं
मरुवकपरिवारं पाटलादामकण्ठे ।
स तु सरसजलार्द्रोन्मीलितः सुन्दरीणां
दिनपरिणतिजन्मा कोऽपि वेषश्चकास्ति ॥ ३३० ॥

एवमन्यदपि कविप्रसिद्ध्याभ्यूह्यम् ।

(68) शोभास्रग्गन्धरसैः फलार्चनाभ्यां च पुष्पमुपयोगि ।
षोढा दर्शितमेतत्तत्सप्तममनुपयोगि तथा ॥
यत्प्राग्विमासे कुसुमं निबद्धं तदुत्तरे बालफलं विधेयम् ।
तदग्रिमे प्रौढिधरं च कार्यं तदग्रिमे पाकपरिष्कृतं च ॥
द्रुमोद्भवानां विधिरेष दृष्टो वल्लीफलानां न [3]महानेहा ।
तेषां द्विमासावधिरेव कार्यः पुष्पे फले पाकविधौ च कालः ॥
अन्तर्व्याजं बहिर्व्याजं बाह्यान्तर्व्याजमेव च ।
सर्वव्याजं बहुव्याजं निर्व्याजं च तथा फलम् ॥
लकुचाद्यन्तर्व्याजं तथा बहिर्व्याजमत्र मोचादि ।
आम्राद्युभयव्याजं सर्वव्याजं च ककुभादि ॥
पनसादिबहुव्याजं नीलकपित्थादि भवति निर्व्या-
सकलफलानां षोढा ज्ञातव्यः कविभिरिति भेदः

[

---

1. N. भञ्जा° 2. A. B. विचिकिल 3. A. B. महाननहा:

यदुक्तम्--

(16) अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥ इति
[ ध्वन्यालोक उ. ३. ]

भक्त्या शब्दार्थयोर्दोषा इत्युक्तम् । तत्र च शब्दस्य पदवाक्यरूपत्वात्प्रथमं द्वौ पददोषावाह—

**८८) निरर्थकासाधुत्वे पदस्य ॥४॥**

दोष इति वर्तते । कृतसमासयोर्भावप्रत्ययः । तेन निरर्थकत्वमसाधुत्वं च पदस्य दोषौ । एवमुत्तरत्रापि योज्यम् । तत्र चादीनां पूरणार्थत्वे निरर्थकत्वं यथा—

मुह्यन्मुहुर्मुहुरहं चपलाकुलाक्षः
कृत्वा स्खलन्ति भवतोऽभिमुखं पदानि ।

---

तदेवं देशकालौ व्याख्यातौ ॥

**वयः** शैशवादिकम् ।

**जातिः** स्त्रीपुंसादिका ब्राह्मणत्वादिका वा । आदिग्रहणाद्विद्यावित्तकुलपात्रादयो लभ्यन्ते ।

**वेषः** कृत्रिमं रूपम् ।

**व्यवहारः** चेष्टा । आदिग्रहणादाकारवचनादयो ज्ञेयाः । वेषव्यवहारादीति देशादिभिः प्रत्येकमभिसम्बध्यते । तेन देशे वेषस्य व्यवहारस्याकारस्य वचनस्य वा, औचित्येन निबन्धः करणीय इत्यर्थः । एवं कालादौ योज्यम् । यथा[1] **कान्यकुब्जाचार्यदेश** उद्धतो वेषो दारुणो व्यवहारो भयंकर आकारः परुषं च[2] वचनमनुचितम् । म्लेच्छेषु त्वेतदेवोचितम् । तथा नागरेषु यदुचितं तदेव ग्राम्येष्वनुचितमिति । यथा—

परिभ्रमन्मूर्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितैर्नवातपामृष्टसरोजचारुभिः ॥३३१॥
[ कि. स. ४. श्लो. १४ ]

गोपीनां हि ग्राम्यत्वात्कनककुण्डलान्यनुचितानीति । एवं कालादावप्युन्नेयम् ।

---

1. A. B. C. कान्यकुब्ज   2. C. drops च

स्वामिन् भवच्चरणयोः शरणं प्रपन्नः
संसारदारुणदरेण हि कांदिशीकः ॥२०१॥
[ ]

पदैकदेशः पदमेव तन्निरर्थकत्वं यथा—

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-[1]
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥२०२॥
[ ]

अत्र दृशामिति बहुवचनमनर्थकम् । कुरङ्गेक्षणाया एकस्या एवोपादनात् ।

न च—

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥२०३॥
[ अ. श. श्लो. ४. ]

इत्यादिवद् व्यापारभेदाद् बहुत्वम्, व्यापाराणामनुपात्तत्वात् । न च व्यापारेऽत्र दृक्शब्दो वर्तते ।

यमकादौ निरर्थकत्वं न दोष इति केचित् । यथा—

योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलून
बभौ मुखेनाप्रतिमेन काचन श्रियाधिका तां प्रति
[ शि. व. स.

1. I. श्वासानलो

शब्दशास्त्रविरोधोऽसाधुत्वम् । यथा—

उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः ।
गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः।२०५।
[ कि. स. १७. श्लो. ६३ ]

अत्र हन्तेर्नाकर्मकत्वम्, न स्वाङ्गकर्मकत्वमित्यात्मनेपदाप्राप्तेः 'आजघ्ने' पदमसाधु ।

'न दोषोऽनुकरणे' इति वक्ष्यमाणत्वात् 'पश्यैष च गवित्याह' इत्यत्र न दोषः ।

अथ त्रयोदशवाक्यदोषानाह—

**८९) विसन्धिन्यूनाधिकोक्तास्थानस्थपदपतत्प्रकर्षसमाप्तपुनरात्ताविसर्गहतहृत्तसंकीर्णगर्भितभग्नप्रक्रमानन्वितत्वानि वाक्यस्य ॥५॥**

दोष इति वर्तते । तत्र सन्धिः स्वराणां समवायः संहिताकार्येण द्रवद्रव्याणामिवैकीभावः, कवाटवत्स्वराणां व्यञ्जनानां च प्रत्यासत्तिमात्ररूपो वा । तस्य विश्लेषाद[1]श्लीलत्वात्कष्टत्वाच्च वैरूप्यं विसन्धित्वम् । विश्लेषाद्यथा—

कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः ॥ २०६ ॥
लोलालकानुविद्धानि आननानि चकासति ॥२०७॥
[ ]

संहितां न करोमीति स्वेच्छा सकृदपि दोषः । प्रकृतिस्थत्वविधाने त्वसकृत् । ( 17 ) 'संहितैकपदवत्पादे[2]ष्वर्धान्तवर्जम्' इति हि काव्यसमयः ।

अश्लीलत्वात्, यथा—

विरेचकमिदं नृत्यमाचार्याभासयोजितम् ॥ २०८ ॥
[ ]

---

**विरेचकमिति** । विगतं ग्रीवादीनां रेचकं भ्रमणं यत्र । असम्यगाचार्येण योजितमिति प्रकृतोऽर्थः । विरेचकं प्रवर्तकमिति च ।

---

1. P. विश्लेषोद°    2. I. पादेऽर्धान्त

अत्र 'विरेचकम्' इति जुगुप्सा । 'याभ' इति व्रीडा ।

तथा—

चकाशे पनसप्रायैः पुरी षण्डमहाद्रुमैः ॥ २०९ ॥

[ ]

अत्र 'शेप' इति 'पुरीषम्' इति 'महाद्रुम' इति च व्रीडा-जुगुप्सामङ्गलार्थस्मारकत्वादश्लीलाः ।

कष्टत्वात्, यथा—

मञ्जर्युद्गमगर्भास्ते गुर्वाभोगा द्रुमा बभुः ॥२१०॥

वक्त्राद्यौचित्ये चेति वक्ष्यमाणत्वाद्दुर्वचकादौ न दोषः । यदाहुः-

(18) शुकस्त्रीबालमूर्खाणां मुखसंस्कारसिद्धये ।
प्रहासासु च गोष्ठीषु वाच्या दुर्वचकादयः ॥

अवश्यवाच्यस्यानभिधाने न्यूनपदत्वं यथा–'तथाभूतां दृष्ट्वा' इति । अत्रास्माभिरिति खिन्न इत्यस्मात्पूर्वमित्थमिति च नोक्तमिति न्यूनत्वम् ।

---

अवश्यवाच्यस्येति । अवश्यंभावेनाभिधेयस्याविनाभावेनौचित्येन वा प्रतीयमानस्यानभिधानेऽपि न दोषः[1] । यथा—

कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप ।
तथापीयमवस्था ते न सर्वत्र भवादृशाः ॥ ३३२ ॥

[ औ. प्र. श्लो. १८५ ]

यत्र ह्यन्यक्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रथम ति न्यायादस्तिर्लभ्यते । यथा च—

मा भवन्तमनलः पवनो वा वारणो मदकलः प
वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह

[ ]

---

× विरे, याभ, मैः, म, जुगुप्सा. are indistinct in P. The copyist has written the lines विरेचक etc on the margin.

1. A. drops from यमान to दहति, that is about twenty lines

तथा—

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।

कमपराधलवं[1] मम पश्यसि त्यजसि मानिनि दासजनं यतः ।।३३३।।

[ वि. अं. ४. श्लो. २९ ]

अत्रापराधस्य लवमपीत्यप्यर्थो[2] वाच्यः ।

तथा—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः

सुरधनुरिदं दूराकृष्टं[3] न नाम शरासनम् ।

अत्रौचित्यादद्राक्षीदित्यादिक्रिया गम्यन्ते । तथा—

मा भाक्षीन्मा भाङ्क्षीन्मा क्षैप्सीन्मातुर्विहृत भवन्तम् ।

सुकृतैरध्वन्यानां मार्गतरो स्वस्ति तेऽस्तु सह लतया ।।३३४।।

[ ]

अत्रानल इत्यादीनि कर्तृपदान्यौचित्यात्प्रतीयन्ते ।

एवं चानभिहितवाच्यत्वं पृथग्दोषत्वेन न वाच्यम् । धर्मिधर्मोभयात्मनो वस्तुनः प्रतिपत्तये पुनः स एव शब्दस्तत्पर्यायः सर्वनाम वावश्यं वाच्यमपि नोक्तं यत्र तत्रापि न्यूनत्वमिति केचिद्वदन्ति । यथा—

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।।३३५।। इति ।

[ कु. सं. स. ५. श्लो. ७१ ]

अत्र हि कपालिशब्दो धर्मिधर्मोभयार्थवृत्तिः[4] संज्ञिमात्रं वा प्रत्याययेत् कपालसम्बन्धकृतं वा गर्हितत्वमुभयमपि वेति त्रयः पक्षाः । तत्र प्रथमपक्षे विशेषप्रतिपत्तये कपालिग्रहणमपरमपि कर्तव्यम्, येनास्य गर्हितत्वं प्रतीयते । द्वितीयपक्षे तस्याश्रयप्रतिपत्तये तेनैव तत्पर्यायेण सर्वनाम्ना वा विशेष्यमवश्यमुपादेयं भवति, येन तस्य विवक्षितार्थसिद्धावार्थो हेतुभावोऽवकल्प्येत । तत्र तेनैवोपादाने यथा—

सततमनङ्गोऽनङ्गो[5] न वेत्ति परदेहदाहदुःखमहो ।

यमदयं दहति मामनलशरो ध्रुवमसौ न कुसुमशरः ।।३३६।। इति ।

[ ]

1 I. किम॰ 2. I. मपीत्यर्थो. 3. I. दूराकृष्टं न तस्य

4. A. B. ॰धर्मोभयार्थ॰ 5. C. सतत

अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥२१२॥
[ वि. अं. ४. श्लो. १. ]

---

पर्यायेण यथा—

कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ ३३७ ॥
[ कु. सं. स. ३. श्लो. १० ]

अत्र हि हरस्येति पर्यायशब्देनोपात्तस्यार्थस्य पिनाकपाणित्वं धैर्यच्युतेरशक्यकरणीयतायामार्थो हेतुः । अन्यथा हरग्रहणस्य पौनरुक्त्यं स्यादिति । यथा च[1]—

एकः शङ्खामहिवररिपोरत्यजद्वैनतेयात् ॥३३८॥ इति ।

सर्वनाम्ना यथा—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ ३३९ ॥
[ वि. शा. भ. अं. १ श्लो. २ ]

अत्रापि ता इति सर्वनामोपात्तस्यार्थस्य वामलोचनात्वं मनसिजदाहजीवनयोरन्योन्यविरुद्धयोरप्यभिन्नहेतुकत्वोपपत्तावार्थो हेतुः । इतरथा वामलोचनात्वस्य पुनरुपादानप्रसङ्गः । अत एव तृतीयः पक्षो न संभवत्येव । एकस्यैव शब्दस्यावृत्तिमन्तरेणानेकार्थप्रतिपादनसामर्थ्यासंभवात्[2] । न चासावनिबन्धना शक्या कल्पयितुम् । न चैषामेकमप्यत्रोक्तमिति न्यूनपदत्वमिति । वयं तु ब्रूमः न हि शब्दस्याभिधैव वृत्तिरिष्यते येनैकस्मिन्नेवार्थे उपक्षीणत्वात्तस्याः शब्दान्तरमर्थान्तरार्थं प्रयुज्येत तदावृत्तिनिबन्धनं वा किञ्चित्परिकल्प्येत । किं तु वृत्त्यन्तरमपि सहृदयैकसंवेद्यं[3] व्यक्तिस्वभावमस्त्येव । एवं च वृत्त्यन्तरोपकल्पनायामेकस्मादेव शब्दाद्वाच्येन सहैव व्यङ्ग्यस्यापि प्रतीतिरनिवारितप्रसरैव । तथा हि—परमेश्वरवाचकसहस्रसंभवेऽपि 'कपालिनः' इति तद्वाचकतया प्रयुक्तं बीभत्सरसालम्बनविभावतां सूचयज्जुगुप्सास्पदत्वं ध्वनति । सम्प्रति द्वयं चेत्यतीव रमणीयम् । यत्किल पूर्वमेका सैव दुर्व्यसनदूषितत्वेन शोचनीया जाता । सम्प्रति पुनस्त्वया तस्यास्तथाविधदुरध्यवसायसाहायक[4]मिवारब्धमित्युपहस्यते । प्रार्थनाचान्द्रो-ऽप्यतितरां रमणीयः । यस्मात्काकतालीययोगेन तत्समागमः क
वहः । प्रार्थना पुनरत्रात्यन्तकौलीनकलङ्ककारिणी । सा च त्व
नुभूयमानपरस्परस्पर्धिलावण्यातिशयप्रतिपादनपरत्वेनोपात्तम् । ६
मतीति च मतुप्प्रत्ययेन द्वयोरपि प्रशस्यता प्रतीयते ।

---

1. B. C. यथा वा 2. B. drops सं
3. A. B. drop हृदयैकसं 4. B. drops साहायक

अत्र भ्रान्तौ निवृत्तायां तद्विषयभूतानां[1] नवजलधरसुरधनुर्धारासा[2]राणामिव विद्युतोऽपीदमापरामर्शो वाच्यः ।

यथा वा उपमायाम्—

संहयचक्का[3]अजआ वियसिअकमला मुणालसंछण्णा ।
वावी वहुव्व[4]रोअणविलित्त[5]थणया सुहावेइ ॥२१३॥
[ ]

अत्र कमलमृणालप्रतिकृत्योर्मुखबाह्वोः केनापि पदेनानुपादानान्न्यूनपदत्वम् ।

क्वचिद्गुणः, यथा—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किन्नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥२१४॥
[ अ. श. श्लो. ४० ]

क्वचिन्न गुणो न दोषः, यथा—'तिष्ठेत्कोपवशात्' इति । अत्र पिहितेत्यतोऽन्तरं 'नैतत् यतः' इत्यंतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः । उत्तराप्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधत इति न दोषः ।

अधिकपदत्वं यथा—

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अनिरुद्धसमन्वितोक्तियुक्तिः प्रतिमल्लास्तमयोदयः स कोऽपि ॥२१५॥
[ ]

---

1. I. °भूतयोः, 2. I. धारासारयोः, 3. I. °कायजुया 4. I. रोयण

5. L. reads the verse as follows: सहयविक्काअविआविअसिअकमलामुणालसंछण्णा । वावी बहुव्व रोयणविलित्तथयरा सुहवइणा ॥

अत्र 'आकृति'शब्दोऽधिकः ।

तथा—ताडीजह्यो निजघ्ने कृततदुपकृतिर्बल्कृते गौतमेन ॥२१६॥

[ ]

अत्र 'तत्'शब्दः ।

तथा—

दलत्कन्दलभाग्भूमिः सनवाम्बुदमम्बरम्[1] ।
वाप्यः फुल्लाम्बुजयुजो जाता दृष्टिविषं मम ॥ २१७ ॥

[ ]

अत्र भजिः सहशब्दो युजिश्चाधिकः ।

तथा—'बिसकिसलयच्छेदपाथेयवन्तः' ।२१८। इति ।

[मे. दू. श्लो. ११]

त्वगुत्तरासङ्गवतीमधीतिनीम् ।२१९। [कु. सं. स. ५. श्लो. १६]

इति च मत्वर्थीयस्याधिक्यम् । बहुव्रीहिसमासाश्रयेणैव तदर्थावगतिसिद्धेः । यदाहुः– ('कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात्प्रक्रमस्य') ! तथा—

वासो जाम्बवपल्लवानि जघने गुञ्जास्रजो भूषणम् ।२२०। इति

[ ]

तदीयमातङ्गघटाविघट्टितैः ॥२२१॥ इति ।

[ ]

येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥२

इत्यत्र तद्धितप्रत्ययस्याधिक्यम् । षष्ठीसमासा

गतेः । यत्र त्वर्थान्तरे तद्धितस्योत्पत्तिर्न तत्र समास[1]

तस्याधिक्यम् । यथा—

1. L. °मन्दरम् 2. I. समासात् प्रतीति°

अथ भूतानि वार्तघ्नशरेभ्यस्तत्र तत्रसुः ॥२२३॥ इति । [ ]

अत्र हि अपत्यार्थे तद्धितो नेदमर्थे इति ।

तथा—

किं पुनरीदृशे दुर्जाते जाते[1] जातामर्षनिर्भरे च मनसि नास्त्येवावकाशः शोकक्रियाकरणस्य ॥२२४॥ [ ]

इत्यत्र क्रियाकरणयोः । यथा वा उपमायां—

अहिणवमणहरविरइअवलयविहूसा विहाइ नववहुआ[2] ।
कुंदलयव्व समुप्फुल्लगुच्छपरिलिंत[3]भमरगणा ॥२२५॥
[ ]

अत्रोपमेयस्य नीलरत्नादेरनिर्देशे भ्रमरगणपदमभिरिच्यत इत्यधिकपदत्वम् ।

तथा—

अलिभिरञ्जनबिन्दुमनोहरैः कुसुमभक्ति[4]निपातिभिरङ्कितम् ।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥२२६॥
[ र. वं. स. ९. श्लो. ४१ ]

अत्र तिलकप्रमदयोरेकतरस्य समासोक्तित एवाक्षेपादन्यतरस्याधिकत्वम्[5] । यथा वा रूपके—

शोकानलधूमसम्भारसम्भूताम्भोदभरितमिव वर्षति नयनवारिधाराविसरं शरीरम् ॥२२७॥
[ ]

अत्र शोकस्य केनचित्साधर्म्येणानलत्वेन रूपणमस्तु, धूमस्य पुनर्न किञ्चिद्रूप्यमस्तीति—अधिकपदत्वम् ।

---

1. I. drops जाते  2. I. वहुवा  3. N. परिच्छित्त
4. कुसुमपंक्ति°  5. I. °कपदत्वम्

तथा

निर्मोकमुक्तिमिव गगनोरगस्य लीलाललाटिकामिव त्रिविष्टपविटस्य ॥२२८॥ [ ]

अत्र रूपकेणैव साम्यस्य प्रतिपाद्यमानत्वादिव[1] शब्दस्याधिक्यम् । यथा वा समासोक्तौ—

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयापि दिनश्रिया।२२९।
[ हरविजय स. ३. श्लो. ३७ ]

अत्र तिग्मरुचेः ककुभां च यथासदृशविशेषणवशेन व्यक्तिशेषपरिग्रहेण[2] च नायकतया व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति दयितयेत्यधिकम् । यथा वान्योक्तौ—

आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते
मध्ये वा धुरि वा लसँस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनाम्
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥२३०॥
[ भल्लट. श. श्लो. ६९. ]

अत्राचेतसः प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तेः प्रभुमिवेत्यधिकम् । तथा—

द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपकः ।
बहुविधाभ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः॥२३१।
[ भल्लट. श. श्लो. ४. ]

अत्र भवदर्थस्यान्योक्तिबलेनैवाक्षेपात् 'भवानिव' इत्यभिन्नम् ।

क्वचिद्गुणो यथा—

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति .

1. P. त्वादिव inditsint     2. I. विशेषलिङ्गपरि...

तत्साधवो न न विदन्ति विदन्ति किन्तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥२३२॥
[ सुभाषितावली. श्लो. २७१ भगवत्तरारोग्यस्य ]

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

उक्तपदत्वं द्विःप्रयोगः[1] । (19) नैकं पदं द्विः प्रयोज्यं प्रायेणेति हि समयः [ का. लं. सू. अधि ५ अ. १. सू. १ ] । यथा—

अधिकरतलतल्पं कल्पितस्वापलीला
परिमलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥ २३३ ॥
[ ]

अत्र लीलेति ।

क्वचिद्गुणो यथा लाटानुप्रासे—

जयति क्षुण्णतिमिरस्तिमिरान्धैकवल्लभः ।
वल्लभीकृतपूर्वाशः पूर्वाशातिलको रविः ॥ २३४ ॥
[ ]

क्वचिच्छब्दशक्तिमूले ध्वनौ यथा—

ताला जायन्ति गुणा जाला ते सहिअएहिं घिप्पंति ।
रविकिरणाणुग्गहियाइं हुंति कमलाइं कमलाइं ॥ २३५ ॥
[ वि. बा. ली. ]

---

**क्वचिद्गुण इति** । लाटानुप्रासव्यञ्जयविहितानुवाद्यत्वेषु ।
**तिमिरान्धेति** । तिमिरान्धाः घूकवर्जाः पक्षिणः
**तालेति** तदा । **जालेति** यदा ।

---

1. L. द्विप्रयोगः

विहितस्यानुवाद्यत्वे यथा—

जितेन्द्रियत्वं विनयस्य साधनं[1] गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागाच्च[2] भवन्ति सम्पदः ॥ २३६ ॥

[ सुभाषितावली २९१७ भारवेः ]

अस्थानस्थपदत्वं[3] यथा—

प्रियेण संग्रथ्य विपक्षसंनिधौ निवेशितां वक्षसि पीवरस्तने ।
स्रजं न काचिद् विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि।२३७

[ कि. स. ८. श्लो. ३७ ]

अत्र 'स्रजं काचिन्न जहौ' इति वाच्यम् । तथा—

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ।२३८

[ कु. सं. स. ५. श्लो. ७१ ]

अत्र त्वंशब्दादनन्तरश्चकारो युक्तः । तथा[4]—

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्रीः
वक्त्रे पार्श्वे तथैषा[5] प्रतिवसति महाकुट्टिनी खड्गयष्टिः ।

---

(69) 'डेर्डाहिडालाइया काले' [ ] इति यत्तद्रूपां डेर्डालादेशः।

त्वंशब्दादिति । समुच्चयद्योतको हि चकारः । समुच्चीयमानार्थादनन्तरमेव प्रयोक्तव्य इति हि क्रमः । एवं पुनःशब्दोऽपि व्यतिरिच्यमानार्थानन्तर्येणैव प्रयोगमर्हति । अन्यत्र तु प्रयुज्यमानोऽस्थानस्थ... । यथा—

उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुन

[ ]

---

1. I. कारणम् 2. I. जनानुरागप्रभवा हि. 3. L. अस्थानस्थनत्वं पदत्वं
4. P. drops तथा. 5. P. तथैका

आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥२३९॥
[ सुभाषितावली श्लो. २५९६ ]

अत्र 'इत्थं प्रोच्येव' इति न्याय्यम् । तथा—

लग्नं रागावृताङ्ग्या सुदृढमिह[1] ययैवासि यष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्ति दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ।२४०।
[ सुभाषितावली २५९५ हर्षदत्तस्य ]

अत्र ' इति श्रीनियोगाद् ' इति वाच्यम् । तथा—

तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।२४१।
[ र. वं. स. १६. श्लो. १३ ]

इत्यत्र परामर्शनीयमर्थमनुक्त्वैव यस्तस्य तदा परामर्शः सोऽस्थानस्थपदत्वं दोषः । तथा—

---

अत्र हि पुनःशब्दस्तेनेत्यनन्तरं प्रयोज्यः ।

**श्रीनियोगाद्गदितीति** । तथा चोक्तम्—

(70) उक्तिस्वरूपावच्छेदफलो यत्रेतिरिष्यते ।
न तत्र तस्मात्प्राक्किञ्चिदुक्तेरन्यत्पदं वदेत् ॥
उपाधिभावात् स्वां शक्तिं स पूर्वत्रा दधाति हि ।
न च स्वरूपावच्छेदः पदस्यान्यस्य सम्मतः ॥
इति नेवेतरेषामप्यव्ययानां गतिः समा ।
ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम् ॥
यतस्ते चादय इव श्रूयन्ते यदन्तरम् ।
तदर्थमेवावच्छिन्द्युरासमञ्जस्यमन्यथा ॥ इति ।
[ ]

एवं चाक्रमत्वं पृथग्दोषत्वेन न वाच्यम् । अस्थानस्थपदत्व एवान्तर्भावात् ।

**तदेति** । तच्छब्दस्य हि प्रक्रान्तोऽर्थो विषय इष्टो न प्रक्रंस्यमानः[2]

---

1. I. सततमिह   2. A. B. प्रक्रम्यमानः

कष्टा वैषम्यथा नित्यं कष्टश्च वहनक्लमः[1] ।
श्रवणानामलङ्कारः कपोलस्य तु कुण्डलम् ॥ २४२ ॥
[ ]

अत्र श्रवणानामिति पदं पूर्वार्धे निवेशयितुमुचितम्। (20) 'नार्धे किञ्चिदसमाप्तं वाक्यम्' इति हि कविसमयः [का. लं. सू. अधि. ५. अ. १. सू. ६ ]। यथा वोत्प्रेक्षायाम्—

पत्तनिअंबप्फंसा ण्हाणुत्तिण्णाए सामलंगीए ।
विहुरा रुअंति[2] जलबिंदुएहिं बंधस्स व भएण ॥ २४३ ॥
[गा. स. ६–५५. स. श. ५९६ ]

अत्र रोदनं बन्धनभयं चेत्युभयमुत्प्रेक्षितं तत्र प्राधान्यात्। रोदनाभिधायिन एव पदादनन्तरमुत्प्रेक्षावाचि पदं प्रयोक्तव्यमिति यदन्यत्र प्रयुक्तं तदस्थानस्थपदम् । प्रधाने ह्युत्प्रेक्षिते[3] तदितरदर्थादुत्प्रेक्षितमेव भवति । यदाह—

---

स्मृतिपरामर्शरूपत्वात् । स्मृतेश्चानुभूत एवार्थो विषयो नानुभविष्यमाणः । अत्र च प्रतीतिमात्रमनुभवोऽभिमतो नेन्द्रियविषयभावः । न च गङ्गार्थः प्रतीतपूर्वो यः परामृश्येत । न चात्र प्रमादजः पादयोः पौर्वापर्यविपर्यय इति शक्यते वक्तुम् । तत्रापि प्रतीपगमनहेतोः शाब्दस्य[4] तन्नीयतीर्थाभिधानव्यवधाने सत्यन्यस्यास्थानस्थपदत्वदोषस्याविर्भावापत्तः तेन पादयोर्विपर्ययः, शाब्दस्य च हेतोर्गङ्गाविशेषणमुखेनार्थत्वमित्युभयविपर्ययोऽत्र श्रेयान् ।

**निवेशयितुमुचितमिति** । तेनार्धान्तरैकवाचकत्व पृथग्दोषत्वेन न वाच्यमित्यर्थः ।

**तदितरदिति** । तस्मात्प्रधानादितरदप्रधानम् । यथा—
ज्यो:तीरसाश्मभवनाजिरदुग्धसिन्धुरत्युन्मिषत्प्रचुरतुङ्गमरीचि
वातायनस्थितवधूवदनेन्दुबिम्बसंदर्शनादनिशमुल्लमतीव
[
अत्र प्रधान उल्लसने उत्प्रेक्षितेऽप्रधानमिन्दुसंदर्शनमु

---

1. I. कष्टा नित्यश्च 2. I. रुयन्ति 3. I. हि।
4. A. B. शब्दस्य

(21) एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः ।
तत्रेवादिः प्रयोक्तव्यः प्रधानादेव नान्यथा ॥ इति

पतत्प्रकर्षत्वं यथा—

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते[1] ॥ २४४ ॥
[ ]

अत्र क्रमात्क्रममनुप्रासो घनयितव्यः ।

पतन्निबद्धः कश्चिद्गुणः, यथा—

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणम् ।
उज्ज्वालः परशुर्भवत्वशिथिलत्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥२४५॥
[ म. च. अं. २. श्लो. ३३ ]

अत्र क्रोधाभावे पतत्प्रकर्षत्वं नास्ति ।

समाप्तपुनरात्तत्वं यथा—

ज्योत्स्नां लिम्पति चन्दनेन स पुमान् सिञ्चत्यसौ मालती-
मालां गन्धजलैर्मधूनि कुरुते स्वादून्यसौ फाणितैः ।
यस्तस्य प्रथितान् गुणान् प्रथयति श्रीवीरचूडामणे-
स्तारत्वं स च शाणया मृगयते मुक्ताफलानामपि ॥२४६॥
[ ]

अत्र चूडामणेरिति समाप्ते वाक्ये तारत्वमित्यादि पुच्छप्रायं पुनरुपात्तं न चमत्करोति ।

---

1. I. विद्यते

क्वचिन्न गुणो न दोषः । यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणमपि तु वाक्यार्थान्तरमेव क्रियते, यथा 'प्रागप्राप्ते' इति ।

रोर्लोपे उत्वादिना उपहतो च विसर्गस्याभावोऽविसर्गत्वम् । यथा—

वीरो[1] विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभान्विताः ॥ २४७ ॥
[ ]

हृतं लक्षणच्युतं । यतिभ्रष्टं वा लक्षणानुसरणेऽप्यश्रव्यम्, अप्राप्त[2]गुरुभावान्तलघु रसाननुगुणं च वृत्तं यत्र तद्भावो हतवृत्तत्वम् । यथा—

अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम् ।२४८।

अत्र वैतालीययुग्मपादे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धमिति लक्षणच्युतम् ।

एतासां राजति सुमनसां दाम कण्ठावलम्बि ॥ २४९ ॥
कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः ॥ २५० ॥
[ ]

इत्यनयोश्चतुर्थे षष्ठे च यतिर्न कृता—इति यतिभ्रष्टम् । एतदपवादस्तु छन्दोनुशासने[3]ऽस्माभिर्निरूपित इति नेह[4] प्रतन्यते ।
[ छ. शा. अ. १. सू. १५ वृत्तौ ]

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा ।
मधुरमथ किं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ २५१ ॥
[ ]

अत्र 'यदिहान्यत्स्वादु' इत्यश्रव्यम् ।

अन्यास्ता गुणरत्नरोहणभुवः कन्या मृदन्यैव सा
संभाराः खलु तेऽन्य एव विधिना यैरेष सृ

1. I. धीरो 2. I. प्राप्तगुरु° 3. I.
4. L. drops from °योश्चतुर्थे to नेह

श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलाद्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २५२ ॥

अत्र 'वस्त्राण्यपि' इति पाठे लघुरपि गुरुत्वं भजते ।

हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव ।
मुग्धविदग्धसभान्तररत्न क्वासि गतः क्व वयं च तवैते ॥२५३॥

[ ]

हास्यरसव्यञ्जकमेतद्वृत्तं करुणरसाननुगुणम् ।

वाक्यान्तरपदानां वाक्यान्तरपदैर्व्यामिश्रत्वं संकीर्णत्वम् । यथा—

कायं खाग्[1]इ छुहिओ कूरं घल्लेइ[2] निब्भरं रुट्ठा[3] ।
सुणयं ग[4]ेण्हइ कंठे हक्केइ अ नां[5]त्तअं थेरो ॥ २५४ ॥

अत्र काकं क्षिपति कूरं खादति कण्ठे नप्तारं गृह्णाति श्वानं मेषयतीति वक्तुमुचितम् । एकवाक्यतायां क्लिष्टमिति क्लिष्टाद्भेदः । क्वचिदुक्तिप्रत्युक्तौ गुणो यथा—

बाले, नाथ, विमुञ्च मानिनि रुषं, रोषान्मया किं कृतम्,
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥२५५॥

[ अ. श. श्लो. ५७ ]

वाक्यमध्ये वाक्यान्तरानुप्रवेशो[6] गर्भितत्वं यथा—

परापकारनिरतैर्दुर्जनैः सह संगतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ २५६ ॥

[ ]

---

1. I. खाइइ 2. I. कूरं घत्तेइ निब्भरं 3. L. N रुद्धो
4. I. °गिम्हइ L. सुणइ गिण्हइ 5. I. निअत्तयं 6. I. °नप्रवेशो

अत्र तृतीयः पादो वाक्यान्तरमध्ये प्रविष्टः[1] ।

क्वचिद् गुणो यथा—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥ २५७ ॥

[ औ. चि. च. पृ. १३८ भट्टप्रभाकरस्य ]

अत्र वीराद्भुतरसवशात् 'वदन्त एव' इत्यादि वाक्यान्तरं मध्ये प्रविष्टं गुणाय ।

प्रस्तुतभङ्गो भग्नप्रक्रमत्वं यथा—

एवमुक्तो मन्त्रिमुख्यैः पार्थिवः प्रत्यभाषत ॥ २५८ ॥

अत्र 'उक्तः' इति प्रक्रान्ते 'प्रत्यभाषत' इति प्रकृतेर्भग्नप्रक्रमत्वम् । 'प्रत्यवोचत'[2] इति युक्तम् । यथा वा–

---

**प्रस्तुतभङ्ग[3] इति** । स[4] हि यथा । प्रक्रममेकरसप्रसृतां प्रतिपत्तृ[5]प्रतीति रुन्धान इव परिस्खलनखेददायी रसभङ्गाय पर्यवस्यतीत्यर्थः ।

**प्रत्यवोचतेति तु युक्तमिति** । एवंविधस्य प्रक्रमाभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात् । यथा 'ताला जायन्ति' इति । यथा वा—

एमे अ जणो तिस्सा देइ कवोलोवमाइ ससिबिम्बम् ।
परमत्थविआरे उण चन्दो चन्दो च्चिअ वराओ ॥३४२॥ [ ]

अत्र ह्युत्कर्षापकर्षविवक्षया परिकल्पितभेदेऽप्येकस्मिन्नर्थे विधेयानुवाद्यविषयेणैकेनैवाभिधानेन विध्यनुवादभावो भणित इति प्रक्रमाभेदप्रकार एवायमिति मन्तव्यम् । केवलं पर्यायप्रक्रमभेदनिवृत्तये चन्दण[6]मिति पाठः परिणमयितव्यः । न चैवमुक्तपदत्वदोषप्रसङ्गः । यथान्ये मन्यन्ते—

---

1. I. °विष्टं 2. I. यथा प्रत्य
3. B. °भाग A. °भग 4. C. drops स हि
5. A. B. drop प्र 6. A. C. चन्दमणमिति C. च.

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ २५९ ॥
[ कुं. सं. स. ६ श्लो. ९४. ]

अत्र 'अनेन विसृष्टाः' इति वाच्यम् ।

वैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः॥२६०॥
[ किरात. स. ३ श्लो. ३४ ]

अत्र स्यादेः प्रत्ययस्य । 'तीव्रेण विद्वेषिभुवागसा च' इति तु युक्तम् । यथा वा[1]—

बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को[2] गजाजिनस्यैव दुकूलभावः॥२६१॥
[ कु. सं. स. ७ श्लो. ३२ ]

अत्र गजेन्द्रचर्मैव[3] दुकूलमस्येति युक्तम् ।

सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्बिसं धृतविकासिबिसप्रसूनाः ।
सैन्याः श्रियामनुपभोगनिरर्थकत्व-
दोषप्रवादममृजन् वननिम्नगानाम् ॥२६२॥
[ शि. व. स. ५. श्लो. २८ ]

(71) 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इति [ का. लं. सू. अधि ५. अ. १. सू. १ ] । उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो हि विषय उक्तपदत्वस्य, अयथोद्देशं प्रतिनिर्देशस्तु भग्नप्रक्रमत्वस्येति भिन्नविषयत्वात् ।

**सस्नुरिति** । अत्र स्नानादौ यः कालविशेषः प्रक्रान्तः, स नेजनादावुपेक्षित इति कालस्याप्यत्र प्रक्रमभेद इति केचिदाहुः । वयं तु ब्रूमः—काल-

1. I. drops यथा वा 2. I. °ङ्कः सिंहाजिनस्यैव
3 I. मृगेन्द्रचर्मैव

अत्र त्यादेः । 'विकचमस्य दधुः प्रसूनम्' इति तु युक्तम् ।

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥२६३॥

[ कि. स. ३. श्लो. ४० ]

अत्र कृतः । 'सुखमीहितुं वा'[1] इति तु युक्तम् ।

उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ २६४ ॥

[ बा. रा. अं. १. श्लो. ८ ]

---

विशेषस्य विवक्षामात्र[2]भावितयानवस्थितत्वाद्दोषोऽयमनुद्भावनीय एव । यदाहुः-
(72) 'परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये दर्शनयोग्यत्वात्परोक्षस्या-विवक्षायां लङ् भवत्येव । अजयज्जर्तो हूणान् इति । सतोऽपि चाविवक्षा भवति । यथा—अनुदरा कन्या इति ।' [ ]

सुखमीहितुं वेति तु युक्तमिति । एवं च तुल्यकक्षत्वेन विकल्पार्थवृत्तेर्वाशब्दस्य न विषयोऽयमित्यपि परिहृतं भवति । यथा च—

रुदता कुत एव सा पुनर्भवता नानुमृतेरवाप्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥३४३॥

[ र. वं. स. ८ श्लो. ८५ ]

अत्र हि 'कुत एव तु सानुरोदनात्' इति युक्तः पाठः । इह तु न दोषः—

पृथ्वि स्थिरीभव भुजङ्गम धारयैनां
त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥ ३४४ ॥

[

अत्र हि पृथ्व्यादिविषयः प्रैषलक्षणोऽर्थः कविना

---

1. I. च इति 2. A. °त्रभवियाद्यालवितियान° ८

भगवत्तापसविप्रैरन्यैरपि हासवादसंबद्धम् ।
कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् ॥१४७॥
[1]अविकृतभाषाचारं विशेषभावोपपन्नचरितमिदम् ।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥१४८॥
वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः ।
[2]अनिभृतवेषपरिच्छदचेष्टितकरणं च संकीर्णम् ॥१४९॥
(56) आत्मानुभूतशंसी परसं[3]श्रयवर्णनाप्रयुक्तश्च ।
विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥१५२॥
परवचनमात्मसंस्थैः प्रतिवचनैरुत्तरोत्तरग्रथितैः ।
आकाशपुरुषकथितैरङ्गविकारैरभिनयेच्च ॥१५३॥

तदयमर्थः । द्विविधमपि प्रहसनरूपं हास्यरसप्रधानमित्यर्थः । लक्षणविशेषं विशेषलक्षणम् । भगवत्तापसविप्रा यतिवानप्रस्थगृहस्थाः । अन्ये शाक्यादयस्तै-रुपलक्षितं हास्यप्रधानवचनसम्बद्धं शीलादिना कुत्सितैः पुरुषैः अत एव प्रहस्य-मानैः सामर्थ्यानैरेव भगवदादिभिर्युक्तम् । तथापि च भाषाचारौ यत्र न विकृतावसत्याश्लीलरूपौ तथा विशेषेण भावैर्व्यभिचारिभिरुपपन्नानि पदानि कथा-खण्डानि यस्मिन् । नियतगति एकप्रकार यद्वस्तु तद्विषयः प्रहसनीयलक्षणोऽर्थो यत्र तच्छुद्ध प्रहसनम् । अत्र निर्वचनं यतः परिहासप्रधानान्याभाषणान्यत्र बाहुल्येन भवन्ति, तेन यत्रैकस्यैव कस्यचिच्चरितं दुष्टत्वात्प्राधान्येन प्रहस्यते तच्छुद्धमित्यर्थः । यत्र तु वेश्यादिभिर्योगोऽत्युल्बणं चाकल्पादि तदेकद्वारेणा-नेकवेश्यादिचरितेन हसनीयेन सकीर्णत्वात्संकीर्णम् ।

**आत्मानुभूतशंसीति** । एकेन पात्रेण हरणीयः सामाजिकहृदयं प्रा-पयितव्योऽर्थो यत्र स भाणः । एकमुखेनव भण्यन्ते उक्तिमन्तः क्रियन्ते अप्रविष्टा अपि पात्रविशेषा यत्रेति स भाणः । तत्र स प्रविष्टपात्रविशेष आत्मानुभूत वा शंसति परगत वा वर्णयति । तत्र च प्रयोगयुक्तिमाह—

**परवचनमिति** । परसम्बन्धि वचनं स्वयमङ्गविकारैरभिनयेत् । आह–आकाशे यानि पुरुषकथितानि दृष्टानि यत्र अन्ये तं = पश्यत्याकर्णयति च तत्र तद्वचन स एवानुवदन् सामाजिकान्

**रामाभ्युदये—**

1. I. अधिकृत° 2. I. अनियत° 3. I. परसंश्रय

धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥१५४॥

(57) सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्तथा त्रयोदशभिः ।
वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा ॥१५५॥

[ ना. शा. अ. १८ (N. S.); अ. २०. श्लो. १०-११, ४९-५४, ६०-६३, ६६-६७, ८२-१००, १०६-१०९, ११२-११४, ११६-११७ (C. S. S.) ]

---

'तापसः—( आकाशे । ) भोः ! वाद्गले क्वावकाशे रामभद्रस्तिष्ठति । किं ब्रवीषि । तस्या एव पथिकजनमनोहारिण्याः पुष्करिण्याः[1] परिसरे सीतया लक्ष्मणेन च सह न्यग्रोधच्छायायां सुखोपविष्टस्तिष्ठति ।' । ५८२ । इति । [ ]

न केवलं परवचनमभिनयेत् । किं तु प्रतिवचनैः स्वोक्तैः सह एवोत्तरोत्तरप्रथितयोजनाभिरुपलक्षितः । ननु योऽसावेकोऽत्र प्रविशति स क इत्याह—**धूर्तेति** । नानाप्रकारावस्थाविशेषा लोकोपयोगि[2]व्यवहारात्मका आत्मा वाच्य यस्य । अत एव बहुचेष्टः सततं कार्य इति । सकलसामान्यपृथग्जनोपयोग्यत्र लोकव्यवहारो वेश्याविटादिवृत्तान्तात्मा निरूप्यत इति । बाहुल्येन पृथग्जनव्युत्पत्त्युपयोगिरूपकमिदम् । राजपुत्रादीनामपि शभलीवृत्तान्ता ज्ञेय एवावञ्चनार्थमिति स प्रयोज्य इत्यर्थः ।

**सर्वरसेति** । सर्वैं रसैः शृङ्गारादिभिर्लक्षणैश्च विभूषणादिभिः षट्त्रिंशता तत्साहचर्याद्गुणालङ्कारादिभिरपि सर्वराढ्या । तदुपरि चाङ्गैस्त्रयोदशभिर्युक्ता तथा शब्दादुक्तप्रकारव्यतिरिक्तवक्रोक्त्यन्तरसङ्कुलापीत्यर्थः ।

**एकाङ्केति** । इतिवृत्तसंक्षेपमस्यां दर्शयति—**एकहार्येति** । आकाशपुरुषभाषितैरित्यर्थः ।

**द्विहार्येति** । उक्तिप्रयुक्तिवैचित्र्येणेत्यर्थः ।

पुमर्थोपयोगश्चामीषां प्रदर्श्यते । तथा हि—नाटके धर्मार्थकामानामन्यतमस्य गुणीभूतेतरार्थद्वयवृत्तेराराधन राज्ञां[3] वृत्तं नाट्ये साक्षादिव पश्यन्त उपादेयतया प्रतिपद्यन्ते । तत्रापि धर्माराधने दान[4]तपोयागरूपमनुष्ठानं यशस्करं दृष्टफलमामु-

1. A. B. drop पुष्करिण्याः   2. A. drops पयोगि.
3. A. drops राज्ञां वृत्तं ना   4. A. drops दान

(58) विष्कम्भकप्रवेशकरहितो यस्त्वेकभाषया भवति
अप्राकृतसंस्कृतया स सट्टको नाटिकाप्रतिमः ॥ इति ॥
[ ]

---

ष्मिकफलं च व्युत्पाद्यते । अर्थाराधने तु शत्रूच्छेदपुरःसरा यशोवतंसा लाभपालनसमेधनफलविनियोगपर्यन्ता कपटातिसन्धानबहुला सन्धिविग्रहात्मिका राजवृत्तिर्व्युत्पाद्यते । कामाराधने चानुपजातसंभोगासु च दिव्यासु कुलजासु कृतशौचासु च स्वाधीनपतिकादिष्वष्टासु परस्परावलोकनादिभिर्दिवा संभोगो रात्रौ वा सोपचार इत्याभ्यन्तरः कामोपभोगो राज्ञस्तासां च[1] राजनि व्युत्पाद्यते। तथा राज्ञामाभ्यन्तरोपभोगे महादेवीदेवीस्वामिनीस्थापिताभोगिनीशिल्पकारिकानाटकीयानर्तक्यनुचारिकापरिचारिकासंचारिकाप्रे[2]षणकारिकामहत्तराप्रतीहारीकुमारीस्थविरायुक्तिकासु यथोचिता राज्ञो वृत्तिस्तासां च यथास्वं राजनि वृत्तिः । तथा स्थापत्यकञ्चुकिवर्षधरोपस्थायिकनिर्मुण्डादीनामन्तर्भवनकक्षासञ्चारः । तथा युवराजसेनापतिमन्त्रिसचिवप्राड्विवाककुमाराधिकृतानां बाह्यसंचारिणां वृत्तम् । तथा विदूषकशकारचेटादिवृत्त व्युत्पाद्यते । नायकप्रतिपक्षाणां च राज्ञामुक्तगुणविपर्ययादशुभोदयं वृत्तं त्याज्यतया व्युत्पाद्यते ।

प्रकरणे तु सचिवसार्थवाहादीनां पूर्ववत्स्वोचिता त्रिवर्गप्राप्तिस्तदर्जने स्थैर्यधैर्यादि, व्यापत्स्वमूढता, कुलस्त्रियां वृत्तं कुलस्त्रियाश्च भर्तरि वृत्तिर्वेश्यासु संभोगो वैशिकनायकलक्षणं विटस्य गुणा दूतकर्मणि ग्राज्यविवेको दूतकर्मसमागमे देशकालौ नायिकाया रागापरागलिङ्गानि नायकयोरपरागकारणानि नायिकाहृदयग्रहणप्रयोगः । उत्तममध्यमाधमनायिकालक्षणयौवनलाभाः । चतुरोत्तममध्यमा नायकाः सामदानभेददण्डोपेक्षाणामुपायानां प्रयोगविभाग इत्यादि प्रयोगतो व्युत्पाद्यते ।

नाटिकायां तु विलासपराणां राज्ञां धर्मार्थाविरोधि रतिफलं वृत्तं नाटक इव व्युत्पाद्यते ।

समवकारे च देवासुरनिमित्तो युद्धादिसंभवो विद्रवस्तथा कपटः संक्षिप्तश्च शृङ्गारो हास्यादि सर्वमेव लौकिकीभिरुपपत्तिभिर्हीनं दिव्यप्रभावसाध्यं व्युत्पाद्यते । पूर्वापरानुसन्धानशून्यधियां प्रहसनकपटविद्रवादिरुचीनां पुस्तावप्लुतलङ्घनछेद्यमायेन्द्रजालचित्रयुद्धादि बहुलयारभट्या परितोष उत्पाद्यते । तथा चाह—

(181) शूरास्तु वीररौद्रेषु नियुद्धेष्वाहवेषु च ।
बाला मूर्खाः स्त्रियश्चैव हास्यशोकभयादिषु ॥

1. A B. drop च 2. A. B. drop प्रेषणकारिका

आदिशब्दात् कोहलादि[1]लक्षितास्तोटकादयो ग्राह्याः । गेयं विभजते :—

**१९९) गेयं डोम्बिकाभाणप्रस्थानशिंगकभाणिकाप्रेरणरामाक्रीडहल्लीसकरासकगोष्ठीश्रीगदितरागकाव्यादि ॥४॥**

पदार्थाभिनयस्वभावानि डोम्बिकादीनि गेयानि रूपकाणि चिरंतनैरुक्तानि । तद्यथा–

(59) छन्नानुरागगर्भाभिरुक्तिभिर्यत्र भूपतेः ।
आवर्ज्यते मनः सा तु मसृणा डोम्बिका मता ॥

---

तुष्यन्तीति गम्यते । इष्टदेवताकर्मप्रभावानुकीर्तनाच्च तद्भक्तानां प्रीतिः । यात्राजागरादिषु प्रेक्षाप्रवर्तनं च । ईहामृगडिमयोरप्येवमेव ।

व्यायोगे तु मन्त्रिसेनापतिप्रभृतीनां वृत्तं युद्धनियुद्धाधर्षणसंघर्षबहुलं व्युत्पाद्यते । उत्सृष्टिकाङ्के चोत्तमानां मध्यमानां च वैरस्यार्दितानां स्त्रीपरिदेवितबहुलं वृत्तं प्रेक्षकाणां चित्तस्थैर्यं विधातुं व्युत्पाद्यते । एवंविधव्यसनपतितानां चित्तस्थैर्यात्पुनरुन्नतिर्दृश्यत इति तत्प्रयोगदर्शनात्प्रतिपद्यमाना व्यसनेऽपि न विषीदन्ति ।

प्रहसने तु स्त्रीबालमूर्खाणां हास्यप्रयोगदर्शनेन नाट्ये प्ररोचना क्रियते । ततः क्रमेण नाट्ये प्रवृत्ताः शेषरूपकधर्मार्थकामेषु व्युत्पाद्यन्ते । प्रसङ्गतश्च भगवत्तापसविप्रादीनां वृत्तच्युतानां कापुरुषाणां वृत्तं शुद्धं तथा वेश्याचेटनपुंसकविटधूर्तबन्धकीप्रभृतीनां प्रवर्तकाल्यस्य च कामिनां वृत्तं सकीर्णं लोकवार्तादम्भधूर्तविवादबहुलं त्याज्यतया व्युत्पाद्यते ।

भाणे च धूर्तविटवेश्याशंभलीनां परस्य वञ्चनपरं प्रेक्षकाणामवञ्चनीयत्वमवबोधादापादयितुं वर्ण्यते ।

वीथ्यां तु बहुविधा वक्रोक्तिविशेषा व्युत्पाद्यन्ते ।

सट्टके च नाटिकायामिव रतिफलं वृत्तं व्युत्पाद्यते । एवं नाटकादीनां स्वरूपं तत्फलं च दर्शितम् । तच्छरीरभूतसन्धिसन्ध्यङ्गादिलक्षणविस्तरस्तु भरतादेवावसेयः ।

मसृणेति । त्रिविधो हि गेयकाव्यस्य प्रयोगः मसृण उद्धतो मिश्रश्च ।

---

1. I. कोलाहलादि

(60) नृसिंहसूकरादीनां वर्णनं जल्पयेद्यतः ।
नर्तकी तेन भाणः स्यादुद्धताङ्गप्रवर्तितः ॥
(61) गजादीनां गतिं तुल्यां कृत्वा प्रवसनं तथा ।
अल्पाविद्धं सुमसृणं तत्प्रस्थानं प्रचक्षते ॥
(62) सख्याः समक्षं पत्युर्यदुद्धतं वृत्तमुच्यते ।
ममृणं च क्वचिद्धूर्तचरितं शिङ्गकस्तु सः ॥
(63) बाल[1]क्रीडानियुद्धादि तथा सूकरसिंहजा ।
धवलादिकृता क्रीडा यत्र सा भाणिका मता ॥
(64) हास्यप्रायं प्रेरणं तु स्यात् प्रहेलिकयान्वितम् ।
(65) ऋतुवर्णनसंयुक्तं रामाक्रीडं तु भाष्यते ॥
(66) मण्डलेन तु यन्नृत्तं हल्लीसकमिति स्मृतम् ।
एकस्तत्र तु नेता स्याद्गोपस्त्रीणां यथा हरिः ॥
अनेकनर्तकीयोज्यं चित्रताललयान्वितम् ।
आचतुःषष्टियुगलाद्रासकं ममृणो[2]द्धतम् ॥

तथा हि—**डोम्बि[2]कासु** नरपतिचाटुकप्राधान्येन प्रवृत्तासु [3]सुकुमारमेव शुद्धं रूपम् । **भाणकेषु** नृसिंहादिचरितवर्णने उद्धतमेव । यत्पुनर्मसृणेऽप्युद्धतं प्रावर्शनि तदुचितमेव । तत्राप्यल्पत्वबहुलकृतो भेदः । पूर्वः **प्रस्थान**प्रबन्धः । उत्तरः **शिङ्गटक**भेदः । उद्धतं तु मसृणानुप्रवेशा**द्भाणिका**भेदः । अन्यदपि **प्रेरणरामाक्रीडरासकहल्लीसका**दिकमल्पत्वबहुत्ववैचित्र्यकृतमिहैव प्रविष्टं वेदितव्यम् ।

ननु डोम्बिकाशिङ्गटकादौ अन्योन्यानुचितत्वं वाक्यानां तत्रश्चानन्वये कथं रञ्जकत्वमिति चेत्, न, देवतास्तुतेः स्त्रीपुंभावसमाश्रयस्य च "
नुगमात् । तथा चाह–(182) 'देवस्तुत्याश्रयकृतं स्त्रीपुभावस .
तत एव **चूडामणिडोम्बिकायां** प्रतिज्ञातम्—

1. I. बालाक्रीडा°

2. I. °द्धतं i. e. both mātrā and anusvāra

3. A. B. डोम्बिकासु  2. A. B. कुमार°

हे द्वेवि डोम्बी णव्वमिसहिड्ड होमि हुउं ।
चोरियमिहुणहं वंमहसारु कहेमि तउ ॥५८३॥ [ ]

चतुर्वर्गोपदेशस्य **राघवविजया**दिरागकाव्येषु दृष्टत्वात् । डोम्बिकादौ तु कामस्यैव प्रच्छन्नानुरागपरमरहस्योपदेशात् । 'यद्वामामिनिवेशित्वम्' इत्यनेन मन्मथसारत्वेनाभिधानात् । सिंहशूकरधवलादिवर्णनेनापि भाणकप्रेरणभाणिकादावप्रस्तुतप्रशंसार्थान्तरन्यासनिदर्शनादिना पुरुषार्थस्यैवोपदेशदर्शनात् ।

अथ पाठ्यस्य गेयस्य च रूपकस्य को विशेषः । अयमाख्यायते–पाठ्ये हि–अङ्गं गीतं चेत्युभयमप्रतिष्ठितम्[1] । तथा हि करकरणचारीमण्डलादि यत्तत्राङ्गोपयोगि तत्स्वरूपेण लयादिव्यवस्थया चानियतमेव, यथारस प्रयुज्यमानत्वेन विपर्यासात् । गेये तु गीतमङ्गं च द्वयमपि स्वप्रतिष्ठम् । तथा हि—यस्य यादृशं लययतिस्वरूपादिकं निरूपितं लम्भविपर्येतिमन्त्रादिवत् । यद्यपि क्वचिद्वर्णाङ्गप्राधान्यं यथा प्रस्थानादौ, क्वचिद्वाद्यप्राधान्यं यथा भाणकादिषु भ्रमतालपरिक्रमणादौ, क्वचिद्गीयमानरूपकाभिधेयप्राधान्यं यथा शिङ्गटकादौ, क्वचिन्नृत्तप्राधान्यं यथा डोम्बिलिकादिप्रयोगानन्तरं हुड्डुक्कारावसरे[2] । अत एव तत्र लोकभाषया **वल्लिमार्ग** इति प्रसिद्धिः । तथापि गीताश्रयत्वेन वाद्यादेः प्रयोग इति गेयमिति निर्दिष्टम् । रागकाव्येषु च गीतेनैव निर्वाहः । तथा हि–**राघवविजयस्य** विचित्रवर्णनीयत्वेऽपि ढक्करागेणैव निर्वाहः, मारीचवधस्य तु ककुभग्रामरागेणैवेति । किं च पाठ्ये साक्षात्कारकल्पानुव्यवसायसम्प्रत्युपयोगिनः पात्रं प्रति भाषानियमस्य नियतस्य छन्दोलङ्कारादेश्चाभिधानं दृश्यते । गीयमानं च नाभिनीयते असंगत्यापत्तेरपि तु यादृशा लयतालादिना यादृगर्थसूचनयोग्योऽभिनयः सात्त्विकादिः प्रधानरसानुसारितया प्रयोगयोग्यस्तदुचितार्थपरिपूरणं ध्रुवागीतेन क्रियते । गेये च सूदादेरिव वस्तुभूतरूपरसादिमध्यपातिविषयविशेषयोजनया कृता प्रीतिः साध्या । डोम्बिकादेर्न नटस्येवालौकिकरूपप्रादुर्भावनया ।

तथा हि—डोम्बिकादौ वर्णच्छटा[3] वर्णादिप्रयोगे तावदभिनयकथैव नास्ति, किं तत्र विचार्यते, केवलनृत्तस्वभावं हि तत् । तदनन्तरं तु धारापरिक्रमपूर्वकलयप्रयोगावसरे ।

पाआलअलेसेसाहिणि हु जय जय लच्छिवच्छलमलिआ ॥५७१॥

इत्यादि यद्गीयते तत्कस्योक्तिरूपम् । यदि तावन्नर्तितुमागताया लौकिक्या

1. C. वे. 2. N. हुड्डुक्काराद्यवसरे 3. N. °दौ च

डोम्बिकाप्रभृतेर्नर्तक्यास्तदा सैवेदानीमेवंभूतं वस्तुरूपं लौकिकं वचनमभिधत्ते । गायनादिसंक्रमितस्ववाक्यतयेति कः साक्षात्कारकल्पार्थः । साक्षात्कारकल्पत्वाध्यवसायगोचरीकार्यत्वं[1] च पाठ्यस्य प्रधानोंऽशः । तेन यथा लोके कश्चित्कंचिदन्योपदेशगानादिक्रमेण वस्तूद्बोधनकरणद्वारेण वा छन्दोनुप्रवेशितया वा कस्यचिन्मनस्यावर्जनातिशयं विधत्ते नृत्यन्नपि गायन्नपि, तद्वदेव डोम्बिकाकाव्यादौ द्रष्टव्यम् ।

'हेट्ठे वि डोम्बी[2]'

इत्यादावपि वचसि सैव डोम्बिका नरपतिपरितोषकार्याभिधायिवचननिष्ठेन गीतेन वाद्येन नृत्येन च राजानमनुरञ्जयितुं गृहीतोद्यमा वक्तीत्वेन पूर्वस्थिता मध्ये काचिदीदृशी चौर्यकामुककेलिकालसमानसा, काचित्पुनरेवंविधा, कश्चिदेवंभूतश्चौर्यकामुकः, कोऽप्येवंभूतस्तत्र काचिदेवं प्रौढदूतीत्येवमादि राजपुत्रहृदयानुप्रवेशयोग्यं तत्प्रसादनेन धनाद्यर्जनोपायमभिदधती तमेव राजपुत्रं परत्वेन तथैव[3] वा समुद्दिश्य अन्यदपि चेष्टितमभिधायान्ते डोम्बिकाकृत्यमेवोपसंहरति । गुणमालायां—

जामि तारा अनुडिअ पुणु णव्वीसमि ' ॥ ५८५ ॥ [ ]

इत्यादौ तत्र तु सा नृत्यन्ती डोम्बिका बहुतरोपरञ्जकगीतादिपटुपेटकपरिवृता त्वां प्रत्यवमहमुपश्लोकितवतीति तन्मध्यवर्तिगायनमुखसंक्रमितनिजवचना लौकिकेनैव रूपेण तद्गीयमानरूपकगतलयतालसाम्येन तावन्नृत्यति । तद्गीयमानपदार्थस्य च सातिशयमावर्जनीये राजादौ हृदयानुप्रवेशितां दर्शयितुं लौकिकव्यवहारगतहस्तभ्रूकर्मरोमाञ्चाक्षिविकारतुल्ययोगक्षेमतयैवाङ्गविकारादिसंभवमप्याक्षिपति । एवं गीतेन रञ्जनं प्राधान्येन विधाय तदुपयोगिनं चाङ्गव्यापारं प्रदर्श्य नृत्तेन पुनश्चित्तग्रहणं कुर्वती नृत्तं प्रधानभाव गीतं च तदुपसर्जनभावं नयन्ती तत एव तदभिनयमनाद्रियमाणा तद्गीयमानाङ्गभावाक्षिप्ततत्समुचितभावमेवाङ्गविक्षेपं करोति लयपरिष्वक्वणादौ[4] । तत्रैयत्यंशे लौकिकमात्रस्वभाव एव रामनटादिव्यवहारवत्का प्रयोज्यप्रयोजकभावाशङ्का । तदनन्तरं च यथैव सा गीतनृत्तादि प्रायुङ्क्त तथैव तत्सदृशं नर्तकी प्रयुङ्क्ते । न तु डोम्बिकां साक्षात्कारकल्पेन दर्शयति तदीयाहार्यादिना स्वात्मरूपप्रच्छादनाद्यभावात् । तत एव डोम्बिकां साक्षात्कारकल्पेन सा दर्शयति, अपि तु तथैव[5] नृत्तं साभिनयं केवलं

1. A. B. गोचरीकार्य 2. A. B. डोम्बि 3. A. B. तथैवा समु°
4. C. °परिष्वक्वणादौ N. परिष्वक्कणादौ 5. N. तदैव

गोष्ठे यत्र विहरतश्चेष्टितमिह कैटभद्विषः ।
रिष्टासुरप्रमथनप्रभृति तदिच्छन्ति गोष्ठीति ॥
यस्मिन् कुलाङ्गना पत्युः सख्यग्रे वर्णयेद्गुणान् ।
उपालम्भं च कुरुते गेये[1] श्रीगदितं तु तत् ॥
लयान्तरप्रयोगेण रासै[2]श्चापि विचित्रितम्[3] ।
नानारसं सुनिर्वाह्यकथं काव्यमिति स्मृतम् ॥इति॥ [ ]

आदिग्रहणात् शम्पाच्छलितद्विपद्यादिपरिग्रहः । प्रपञ्चस्तु ब्रह्म-भरतकोहला[4]दिशास्त्रेभ्योऽवगन्तव्यः ।

प्रेक्ष्यमुक्त्वा श्रव्यमाह—

**२००) श्रव्यं महाकाव्यमाख्यायिका कथा चम्पूरनिबद्धं च ॥५॥**

एतान् क्रमेण लक्षयति—

**२०१) पद्यं प्रायः संस्कृतप्राकृतापभ्रंशग्राम्यभाषानिबद्ध-भिन्नान्त्यवृत्तसर्गाश्वाससंध्यवस्कन्धकबन्धं सत्सन्धि शब्दार्थ-वैचित्र्योपेतं महाकाव्यम् ॥६॥**

छन्दोविशेषरचितं प्रायः संस्कृतादिभाषानिबद्धैर्भिन्नान्त्यवृत्तैर्यथा-संख्यं सर्गादिभिर्निर्मितं सुश्लिष्टमुखप्रतिमुखगर्भविमर्शनिर्वहण[5]संधिसुंदरं शब्दार्थवैचित्र्योपेतं महाकाव्यम् ।

मुखादयः संधयो भरतोक्ता इमे—

---

च प्रदर्शयतीति नालौकिकरूपान्तरप्रादुर्भावनेति । व्युत्पत्त्यभिसन्धानं च गेये नास्ति । पाठ्ये तु तदेव प्रधानं भरतमुनिप्रभृतीनां तथैव मूलतः प्रवृत्ते-रित्यलं बहुना अप्रस्तुतप्रपञ्चेनेति ।

**भिन्नान्त्यवृत्तैरिति ।** उपक्रान्तवृत्तव्युदासेन सर्गादीनां वृत्तान्तरैरुप-संहारः कर्तव्य इत्यर्थः । यथा कुमारसंभवे—

---

1. I. यत्र 2. I. रागे 3. I. विवेचितं
4. I. °कोलाहलादि 5. P. L. निर्बहण°

(67) यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ।
काव्ये शरीरानुगता तन्मुखं परिचक्षते ॥३७॥

---

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥५८६॥
[ कु सं. स. ३. श्लो ६४ ]

यथा वा हरिप्रबोधे आर्यागीतिच्छन्दोबद्धाश्वासकान्ते पुष्पिताग्रा—
भगवति शयिते विभावरीणां द्युतिमपहृत्य यथाविभावरीणाम् ।
गतमशयितया विभावरीणां सघनमहः समतां विभावरीणाम् ॥५८७॥
[ ]

सन्धिबन्धेषु च नाराचतोटकादीनि विचित्राणि छन्दांसि दृश्यन्ते ।

यत्र बीजेति । बीजस्य यत्र समुत्पत्तिः कविप्रयत्नतो निबन्धः । नानारूपोऽर्थः प्रयोजन येषां ते नानार्थाः संभवन्तीति संभवः । नानार्थरसाः संभवो यस्याः सा तथा । काव्ये नाटकादौ । तत्रैव सन्धीनां व्यक्ततयावभासात् ।

अत एव तत्रैवोदाहरिष्यते–शरीरानुगता इति । वृत्तानुगता–इति वृत्तव्यापिनी । तन्मुखम् । यथा वेणीसंहारे कुरुपाण्डवानामुभयेषां क्षेमप्रतिपादकं स्थापकस्य वचनं सहदेवः क्रुद्धस्य भीमसेनस्यानुकूल्येन शमनाय कुरुनिधनपर व्याचक्षे–

निर्वाणवैरदहनाः प्रशमादरीणाम् ॥५८८॥ [ वे. सं. प्रस्तावना. श्लो. ७]

इति । अत्र प्रशमोऽवमानमुदयनिरोधात् । यथा शान्तो वायु शान्तोऽग्निर्वासित इत्यर्थः । तदेवमरीणामवसानेन दाहाभावान्निर्वाणवैराग्नयः पाण्डुतनया नन्दन्तु सह माधवेन । कुरुराजसुतास्तु सभृत्या रुधिरप्रसाधितभुवः क्षतशरीराः स्वर्गस्था भवन्त्विति शत्रुक्षयपूर्वकस्य पाण्डवानां समृद्धिरूपस्य फलस्य बीजं कविप्रयत्नादुत्पन्नम् । नानार्थरससंभवा चास्योत्पत्तिः । नाटकानेकत्वेन पात्रानेकत्वविवक्षया[1] वा नानार्थता रसानाम् । तथा हि–अत्र

एष कुरुसन्धानममृष्यमाणः पृथुललाटतटघटितभीषणभ्रुकुटिरापिबन्निव नः सर्वान् दृष्टिपातेन सहदेवानुयातः क्रुद्धो भीम इत एवाभिवर्तते ॥५८९॥
[ ]

इति पारिपार्श्वकवचनात् सूचितक्रोधस्थायिभावानुभावो ल' सम्भ्रमप्रवेशैरित्यादिस्ववचनप्रकाशितस्वविभावो भीमसेनस्य रौद्रा जनो बीजेन प्रकाशितत्वाद्बीजोत्पत्तेरेव संभवन्निबद्धः । कु

---

1. A. B. °कत्वेन पात्रानेकत्वविवक्षाया

बीजस्योद्घाटनं[1] यत्र दृष्टनष्टमिव क्वचित् ।
मुखन्यस्तस्य सर्वत्र तद्धि प्रतिमुखं स्मृतम् ॥३८॥

निमित्तकः करुणः पाण्डवसिद्धिप्रयोजनो बीजोत्पत्तेरेव संभवन्निबद्धः । यथा दुर्योधनः शोचन्नाह—

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
घ्रातस्ताभ्यां शिरसि विनतो हन्त दुःशासनश्च ।
तस्मिन् बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वे पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा ॥५९०॥

[ वे. सं अं. ४. श्लो. १५ ]

तदेवं भीमसेनस्येव क्रोधात्मकं चेष्टितं शत्रुक्षयफलमित्युपादेयम् । दुर्योधनस्येव च दौरात्म्यभूयिष्ठं चेष्टितं शोकफलत्वात्त्याज्यमिति विधिनिषेधविषयव्युत्पत्तेर्नानार्थता पात्रानेकत्वाश्रया रसानाम् ।

नाटकानेकत्वाद्यथा-सागरिकाप्राप्त्यर्थो वत्सराजस्य शृङ्गारः बीजसमुत्पत्तिरिति । बीजं समुत्पन्नमुक्तविशेषणविशिष्टमिष्यते । तथा हि बीजमेव काव्यशरीरव्यापि यतो मुखसन्धौ तस्योत्पत्तिः । प्रतिमुखे दृष्टनष्टमिव तस्योद्वाहनं गर्भे चोद्भेदस्तस्य अवमर्शे च गर्भनिर्भेदः । निर्वहणे च समानयनमिति काव्यशरीरव्यापिता ।

**बीजस्योद्घाटनमिति** । अयमर्थः—दृष्टनष्टमिव कृत्वा तावन्मुखे 'द्वीपादन्यस्मात्—' इत्यादिना न्यस्तं भूमाविव बीजम्, अमात्येन सागरिकाचेष्टितं वसन्तोत्सवकामदेवपूजादिना तिरोहितत्वान्नष्टमिव, न हि तन्नष्टमेव । सागरिकाचेष्टितस्य हि बीजस्येव तदाच्छादकमप्युत्सवादिरूपं भूमिवत्प्रत्युत कार्यजननशक्त्युद्बोधकम्, तस्य दृष्टनष्टतुल्यं कृत्वा न्यस्तस्यात एव कुङ्कुमबीजस्य यदुद्घाटनं तत्कल्पं यत्रोद्घाटनं सर्वत्रैव कथाभागसमूहे स प्रतिमुखम् । प्रतिराभिमुख्ये । मुखस्याभिमुख्येन[2] यतोऽत्र वृत्तिः । पराङ्मुखता हि दृष्टनष्टकल्पता । तथा हि **रत्नावल्याम्**—

'परपेसणदूसिदं[3] पि सरीरमेदस्स दंसणेण अज्ज मे बहुमदं[4] संपण्णम्' ॥५९१॥

[ र. अं. १. पृ. ४७ (N. S.)

---

1. I. °स्योत्पाटनं
2. A. drops स्याभिमुख्येन 3. N. °करिसिदं 4. A. B. बहुमुदं

उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥३९॥

---

इत्यादिसागरिकोक्तेरनन्तरं सुसंगतारचितराजतत्समागमपर्यन्तं काव्यं द्वितीयाङ्कगतं प्रतिमुखसन्धिरुद्घाटितत्वाद्बीजार्थस्य ।

**उद्भेदस्तस्येति** । प्राप्तिरप्राप्तिरन्वेषणमित्येवंभूताभिरवस्थाभिः पुनः पुनर्भवन्तीभिर्युक्तो गर्भसन्धिः । प्राप्तिसंभवाख्ययावस्थया युक्तत्वेन फलस्य गर्भीभावात् । तथा हि रत्नावल्यां द्वितीयाङ्के सुसंगता—

'सहि अदक्खिण्णा दाणि [1]तुव जा एवं भट्टिणा हत्थेण गहिदा अज्ज वि कोवं न [2]मुञ्चसि' ॥५९२॥ [ र. अं. २. पृ. ९७ ]

इति प्राप्तिरूप उद्भेदः । ततोऽत्र

सागरिका–( सभ्रूभङ्गम् । ) सुसंगदे इआणिं पि न विरमसि ॥५९३॥ [ र. अं. २. पृ. ९८ ]

इति कुमारीभावसमुचितकृतककोपेनापि [3]परिपूर्णरतिप्रकाशनादन्वेषणम् । ततो 'भो एसा क्खु अवरा देवी वासवदत्ता' ॥५९४॥ [ र. अं. २. पृ. ९९ ]

इति विदूषकोक्ते राजनि सचकितं सागरिकां मुञ्चति सागरिकासुसंगतयोश्च निष्क्रमाद्वासवदत्ताप्रवेशादारभ्य तृतीयाङ्के प्रवेशके—

साहु रे अमच्च [4]वसन्तय साहु । अदिसइदो तह अमच्चजोअन्धराअणो इमाए [5]संधिविग्गहचिन्ताए ॥५९५॥ [ र. अं. ३. पृ. १०९ ]

इति काञ्चनमालयोक्तं यावदप्राप्तिस्ततोऽस्याः

अज्जं क्खु मए राअउलाओ [6]पडिणीअन्तीए चित्तसालिआदुआरे वसन्तअस्स सुसंगदाए सह आलावो सुदो' [ र. अं. ३ पृ. १९० ] इति आरभ्य

ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमिति मे
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरम् ॥५९६॥
[ र. अं. ३. श्लो. ४. पृ. ११५ ]

---

1. A. B. तुमं 2. A. B. मुंचदि. 2. A. drops पूर्णर
4. A. B. वसन्तया 3. B. drops from संधि to मए
6. A. B. पडिअन्तीए

तद्वार्तान्वेषणाय गतः चिरयति वसन्तकः [ र. अं. ३. पृ. १२५ ]

इति राजो[1]क्तियावदन्वेषणम् । ततश्च—

ही ही ! भो कोसम्बीरज्जलम्भेणावि न तादिसो पिअवअस्सस्स परि[2]दोसो आसि, जादिसो मम सआसादो पियवअणं सुणिअ भविस्सदि त्ति' ॥५९७॥

[ र. अं. ३. पृ. १२५ ]

इत्यादि विदूषकोक्तेन प्राप्तितोऽस्यां समागमसङ्केतस्थानप्राप्ति यावदन्वेषणम् । ततः—

प्रिये पश्य पश्य

उदयोर्वीभृत एष त्वद्वदनापहृतकान्तिसर्वस्वः ।

पूत्कर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥५९८॥ [ र. अं. ३ श्लो. १२]

इति राजोक्तिपर्यन्तं परिपूर्णा प्राप्तिः । ततः—

दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥५९९॥

[ र. अं. ३ श्लो. १३ ]

इति वासवदत्तामुखोद्घाटनादनन्त[3]रम्—

कथं देवी वासवदत्ता । वयस्य किमेतत् । विदूषकः—(सभयं) अम्हाण जीविदसंसओ ॥६००॥ [ र. अं. ३. पृ. १३३-३४ ]

इत्यादिना अप्राप्तिः । अस्या च

'दिट्ठिआ इमिणा विरहदभट्टिणीवेसेण अणभिण्णादा केणवि इदो च दुस्साला दो णिक्खंतम्[4]हि ॥६०१॥ [ र. अ. ३. पृ. १३८ ]

इति सागरिकोक्त्या अन्वेषणम् । ततश्च सा[5]गरिकया लतापाशे कृते

कहं एसा देवी वासवदत्ता उब्बन्धिय णअं वावादेदि ॥६०२॥

[ र. अं. ३ पृ. १४१ ]

इति विदूषकोक्ते राजनि च समुपेत्य कण्ठपाशमपनयति—

सागरिका—अज्जउत्त, मुञ्च मु[6]ञ्च । पराहीणो क्खु अअं जणो ण पुण मरिदुं

1. N. वत्सराजो°

2. A. drops आसि जादिसो 3. N. °नन्तरं राजा

4. N. केणवि इमादो चित्तसालादो णिक्कमन्ती ण लक्खिदह्मि

5. A. drops °गरिकया लतापशे कृते कहं र°

6. A. B. drop one मुंच

गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा
क्रोधव्यसनजो वाऽपि स विमर्शः प्रकीर्तितः ॥४०॥

---

ईदिसं अवसरं पावेदि । (पुनः कण्ठे पाशं दातुमिच्छति ।) राजा—(निर्वर्ण्य सहर्षम् ।) कथं प्रिया मे सागरिका ।

अलमलमतिमात्रं साहसेनामुना ते त्वरितमयि विमुञ्च त्वं लतापाशमेनं ।
चलितमपि निरोद्धुं जीवितं जीवितेशे क्षणमिह मम कण्ठे बाहुपाशं निधेहि ।६०३।

[र. अं. ३. श्लो. ९७]

इत्यादिना स्फुटमेव प्राप्तिरित्येवं गर्भः । अप्राप्त्यंशश्चात्रावश्यंभावी । अन्यथा हि संभावनात्मा प्राप्तिसंभवः कथं निश्चय एव हि स्यात् । विमर्शे त्वप्राप्तेरेव प्रधानता, प्राप्त्यशस्य च न्यूनतेति विशेषः[1] ।

**गर्भनिर्भिन्नेति** । बीजशब्देन बीजफलम् । अर्थशब्देन निवृत्तिरुच्यते । तेन गर्भान्निर्भिन्नं प्रदर्शितमुखं बहिर्निःसरणोन्मुखं यद्बीजफलं तस्य योऽर्थो निवृत्तिः पुनस्तत्रैव च प्रवेश इव यत्र स विमर्शसन्धिः ।

**स इति** । तच्छब्देन यत्रेत्याक्षिप्तम् । सा च निवृत्तिः क्रोधेन वा निमित्तेन लोभेन वा व्यसनेन वा शापादिना वा । अपिशब्दाद्विघ्ननिमित्तान्तराणां प्रतिपदमशक्यनिर्देशानां संग्रहः । तत्र क्रोधाद्यथा **रत्नावल्यां** तृतीयेऽङ्के क्रोधावेशेन वासवदत्तया कारानिक्षिप्तायां सागरिकायाम् । तथा हि तत्र चतुर्थेऽङ्के प्रवेशकः सागरिकाप्राप्तिसन्देहेन करुणरसात्मकः । अत्रैव सागरिकाप्राप्तिसन्देह मन्यमान आह राजा-

अम्भोजगर्भसुकुमारतनुस्तदासौ कण्ठग्रहे प्रथमरागघने विलीय ।
सद्यः पतन्मदनमार्गणरन्ध्रमार्गैर्मन्ये मम प्रियतमा हृदयं प्रविष्टा ॥६०४॥

[र. अं. ४. श्लो. २]

योऽपि मे विश्वासस्थानं वसन्तकः सोऽपि देव्या संयतः । तत्कस्याग्रतो बाष्पमोक्षं करिष्ये' ॥६०५॥ पुनरत्रैव—

'अप्पिअं तेण पारेमि आचक्खिदुम्' इति विदूषकोक्ते 'राजा-(समाश्वस्य)

प्राणाः परित्यजत मां ननु सत्पथोऽयं
हे दक्षिणा भवत मद्वचनं कुरुध्वम् ।
शीघ्रं न यात यदि तन्मुषिताः स्थ मूढा
याता सुदूरमधुना गजगामिनी सा ॥६०६॥ [र. अं. ४. श्लो. ३]

---

1. A. शेषः

समानयनमर्थानां मुखाद्यानां सबीजिनाम्[1] ।
नानाभावोत्तराणां यद्भवेन्निर्वहणं[2] तु तत् ॥ इति ॥४१॥
[ना. शा. अ. १९. (N. S.); अ. २१, श्लो. ३९–४३ (C. S. S.)]

शब्दवैचित्र्यं यथा–असंक्षिप्तग्रन्थत्वं, अविषमबन्धत्वं, अनति-

---

इति राज्ञः सागरिकाप्राप्तिर्नैराश्यरूपैव ।

'भो, मा अण्णहा संभावेहि । सा क्खु देवीए उज्जेणि पेसिदा । अदो मए अप्पिअं ति भणिदम्' ॥६०७॥ इति[3] विदूषकात्तस्या सन्देहमानीता । तथा हि तद्विसृष्टां रत्नमालां हृदये विन्यस्य पुनराह—

अहह !

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया ।
तुल्यावस्था सखी चेयं तनुराश्वास्यते मम ॥६०८॥ [र. अं. ४ श्लो. ४]

इतीन्द्रजालप्रयोगं यावद्विघ्ने वासवदत्ताक्रोधो निमितम् । एवं लोभादावुदाहार्यम् ।

**समानयनमर्थानामिति** । मुखाद्यानां चतुर्णां सन्धीनां येऽर्थाः प्रारम्भयत्नप्रत्याशा[? प्राप्त्याशा]नियताप्तिलक्षणास्तेषां सह बीजिभिर्बीजविकारैः क्रमेणावस्थाचतुष्टये भर्वाद्भरुत्पत्त्युद्घाटनोद्भेदगर्भनिर्भेदलक्षणैर्वर्तमानानां नानाविधैः सुखदुःखात्मकै रतिहासशोकक्रोधादिभिर्भावैरुत्तराणां चमत्कारास्पदत्वेन जातोत्कर्षाणां यत्समानयन यस्मिन्नर्थराशौ समानीयन्ते फलनिष्पत्तौ योज्यन्ते तन्निर्वहण फलयोगावस्थया व्याप्तम् । तत्र यदा सुखप्राप्तेः फलत्व तदा रतिहासोत्साहविस्मयस्थायिबाहुल्यं धृतिहर्षगर्वौत्सुक्यमदादिव्यभिचारिभावबाहुल्य च[4] प्रारम्भादीनाम् । दुःख[5]हानेस्तु फलत्वे क्रोधशोकभयजुगुप्सास्थायिभावबाहुल्यम्, आलस्यौग्र्यव्यभि[6]चारिभावबाहुल्यं च दृष्टव्यम् । उदाहरणम्—**रत्नावल्या**मैन्द्रजालिकप्रवेशात्प्रभृत्यासमाप्तेरेषामवस्थासन्ध्यादीनां नायकप्रतिनायकतदमात्यतत्परिवारनायिकादिमुखेनापि नियोजनम् । न त्वेकमुखेनैवेति ।

**असंक्षिप्तग्रन्थत्वमिति** । अनेन ग्रन्थगौरवमाचक्षाणः कथारसविच्छेदशङ्किनां मनांस्यावर्जयति ।

---

1. I. सजीविना 2. P. निबर्हण L निर्वहण
3. A. B. drop इति 4. C. drops च
5. C. drops from हाने to एषा 6. A. drops भाव

विस्तीर्णपरस्परसंबद्ध[1]सर्गादित्वं,आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वं वक्तव्यार्थप्रति[2]ज्ञानतत्प्रयोजनोपन्यासकविप्रशंसादुर्जनसुजन[3]स्वरूपवदादिवा-

---

अविषमबन्धत्वमिति। अनेन शब्दसन्दर्भवेदिनां मनो मुदमादधाति।

अनतिविस्तीर्णपरस्परसम्बद्धसर्गादित्वमिति। अनेन ग्रन्थविस्तरभीरूणां चित्तमाकर्षति। सर्गादीनां परस्परमेकवाक्यतया महावाक्यात्मकस्य प्रबन्धस्योपकारितां च दर्शयति।

आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वमिति। तत्र आशीर्यथा हरविलासे—

ओमित्येतत्परं ब्रह्म[4] श्रुतीनां मुखमक्षरम्।
प्रसीदतु सतां स्वान्तेष्वेकं त्रिपुरुषीमयम् ॥६०९॥ [ हरविलास. ]

नमस्कारो यथा रघुवंशे—

'वागर्थाविव' ॥६१०॥ [ र. वं. स. १. श्लो. १ ]

इत्यादि। वस्तुनिर्देशो यथा हयग्रीववधे

आसीद्दैत्यो हयग्रीवः ॥६११॥ इत्यादि।

वक्तव्यार्थेत्यादि। वक्तव्यार्थप्रतिज्ञान यथा सेतुबन्धे—

तं तिअसबन्दिमोक्खं समत्तलोअस्स हिअअसल्लुद्धरणम्।
सुणह अणुरायइधं सीयादुक्खक्खयं दसमुहस्स वहम[5] ॥६१२॥
[ से. ब. आश्वास १. श्लो. १२ ]

प्रयोजनोपन्यासो यथा तत्रैव—

परिवड्ढइ विण्णाण संभाविज्जइ जसो विढप्पन्ति गुणा।
सुव्वइ सुपरिसचरिअं किंतं जेण न हरन्ति कहालावा[6] ॥६१३॥
[ से. ब. आश्वास १. श्लो. १० ]

कविप्रशंसा यथा रावणविजये—

सयलं चेव निबन्धं दोहि पणहिं कलुस पसण्णं च ठिअं।
जाणन्ति कईण कई सुद्धसहावेहिं लोअणेहिं च हिअअम् ॥६१४॥

दुर्जनसुजनस्वरूपं यथा हरविलासे—

---

1 N. °निबद्ध° 2. I. °र्थंतत्प्रति° 3. I. सुजनदुर्जन°

4. N. °त्येकाक्षर ब्रह्म 5. A. B. सुहं 6. N. कव्वालावा

क्यत्वं, दुष्करचित्रादिसर्गत्वं, स्वाभिप्रायस्वनामेष्टनाममङ्गलाङ्कितसमाप्तित्वमिति ।

अर्थवैचित्र्यं यथा—चतुर्वर्गफलोपायत्वं, चतुरोदात्तनायकत्वं, रसभावनिरन्तरत्वं, विधिनिषेधव्युत्पादकत्वं, सुसूत्रसंविधानकत्वं,

इतस्ततो भषन्[1]भूरि न पतेत् पिशुनः शुनः ।
अवदाततया किं च न भेदो हंसतः सतः ॥६१५॥ [ ह. वि. ]

दुष्करचित्रादिसर्गत्वमिति । आदिग्रहणेन यमकश्लेषादयो गृह्यन्ते । ते च किरातार्जुनीयादौ दृश्यन्त एव ।

स्वाभिप्रायेत्यादि । तेष्वभिप्रायाङ्कता यथा—धैर्यं मायुराजस्य, उत्साहः सर्वसेनस्य, अनुरागः प्रवरसेनस्येति । स्वनामाङ्कता यथा— राजशेखरस्य हरविलासे । इष्टनामाङ्कता यथा—लक्ष्म्यङ्कता किराते भारवेः, श्र्यङ्कता शिशुपालवधे माघस्य । मङ्गलाङ्कता यथा-अभ्युदयः कृष्णचरिते[2], जय उषाहरणे[3], आनन्दः पद्मशिखशूद्रककथायाम्[4] इति ।

चतुर्वर्गफलोपायत्वमिति । अनेन चत्वारो वर्गा धर्मार्थकाममोक्षाः त एव व्यस्ताः समस्ता वा फलं तस्योपायतया महाकाव्यं ज्ञापयन् मुक्तकादिभ्यो भेदमाचष्टे ।

चतुरोदात्तनायकत्वमिति । अनेन कथाशरीरव्यापिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमभिदधान आश्रय[5]विभूत्योरप्युत्कर्षमभिदधाति ।

रसभावनिरन्तरत्वमिति । अनेन रसग्रहणेनापि तत्कारणभूतानां भावानां परिग्रहे पृथग्भावग्रहणेन रसभावानां परस्परं कार्यकारणभावमभिदधद्रसेभ्यो भावा भावेभ्यो रसा रसेभ्यश्च रसा इति नैरन्तर्यस्य रसभावसाध्यत्वेन भोजनस्येवैकरसस्य प्रबन्धस्यापि वैरस्यमपाकरोति ।

विधिनिषेधव्युत्पादकत्वमिति । अनेन गुणवतो नायकस्योत्कर्षप्रकाशनेन दोषवतश्चोच्छेदप्रदर्शनेन जिगीषुणा गुणवतैव भाव्यं न दोषवतेति व्युत्पादयति ।

सुसूत्रसंविधानकत्वमिति । अनेन प्रोक्तलक्षणाः पदार्थास्तथा निबन्धनीया यथा प्रबन्धस्य शोभायै भवन्तीति कवीन् शिक्षयति ।

---

1. A. B. झषन् 2. C. °चरितेन
3. C. उदाहरेण 4. N. °शू द्रककथायां 5. C. आशय

नगराश्रमशैलसैन्यावासार्णवादिवर्णनं, ऋतुरात्रिंदिवार्कास्तमयचन्द्रोदयादिवर्णनं, नायकनायिकाकुमारवाहनादिवर्णनं, मन्त्रदूतप्रयाणसंग्रामा-

---

**नगराश्रमे**त्यादिना देशप्रशंसामुपदिशति । नगरवर्णनं यथा **हरिविजय-रावणविजय-शिशुपालवध-कुमारसंभवादौ** । आश्रमवर्णनं यथा **रघुवंश-कीरातार्जुनीयादौ** । शैलवर्णनं **किरातार्जुनीयादौ** । **सैन्यावास**वर्णनं **माघे** । **अर्णव**वर्णनं **सेतुबन्धादौ** ।

**ऋत्वि**त्यादिना कालावस्थोपवर्णनं लक्षयति । तत्र ऋतुवर्णने शरद्वसन्तग्रीष्मवर्षादिवर्णनानि **सेतुबन्ध-हरिविजय—रघुवंश-हरिवंशादौ** । रात्रिवर्णनं **किरातार्जुनीय-कुमारसंभव-शिशुपालवध-हयग्रीववधादौ** । दिवसवर्णनं प्रभातपूर्वाह्णमध्याह्नापराह्णवर्णनानि **शिशुपालवध-किरातार्जुनीयादौ** । अर्कास्तसमयवर्णन **कुमारसंभव-हरिविजय-रावणविजय-सेतुबन्धादौ** चन्द्रोदयवर्णनं **कुमारसंभव-किरातार्जुनीय—शिशुपालवध—सेतुबन्धा**दाविति ।

**नायके**त्यादिना पात्रविशेषाभिनन्दनं सूचयति । तत्र नायकवर्णनं **हरिविजय-रावणविजय-जानकीहरण-रघुवंशादौ** । नायिकावर्णनं **कुवलयाश्वचरित-कुमारसंभव-जानकीहरण—सुभद्राहरणादौ** । कुमारवर्णन **रघुवंशादौ** । **वाहन**वर्णनेत्यादिना हस्त्यश्वगरुत्मत्पुष्पकादिवर्णनानि **हरिविजय-रावणविजयादौ** ।

**मन्त्रे**त्यादिना अर्थप्रधानचेष्टानामुपदेशाच्चतुर्वर्गफलत्वेऽपि भूयसार्थोपदेशकृन्महाकाव्यं भवतीत्यभिधत्ते । तत्र मन्त्रः पञ्चाङ्गः प्रतिपादितः । स यथा **किरातार्जुनीय-शिशुपालवध-भट्टिकाव्य-हयग्रीववधादौ** । दूतस्त्रिधा—निसृष्टार्थः, परिमितार्थः, शासनहरश्च । निसृष्टार्थो यथा—**उद्योगपर्वणि** वासुदेवः, **हरिविजये** वा सात्यकिः[1] । परिमितार्थो यथा-**रामायणे**ऽङ्गदः । शासनहरो यथा—**कादम्बर्यां** केयूरक इति । प्रयाणं त्रिधा-स्वशक्त्युपचये परव्यसने, अभिमतार्थसिद्धये च । तत्र स्वशक्त्युपचये यथा—रघो **रघुवंशे** । परव्यसने यथा-जरासन्धव्यसनिनः शिशुपालस्योच्छेदाय वासुदेवस्य **शिशुपालवधे** । अभिमतार्थस्य सिद्धये यथा-विष्णोः पारिजातहरणाय **हरिविजये**, यथा वा-दिव्यास्त्रलाभायार्जुनस्य **किरातार्जुनीये** इति । संग्रामस्त्रिधा-समः, विषमः, समविषम इति । तत्र समः—द्वन्द्वयुद्धे चतुरङ्गयुद्धे च । द्वन्द्व-

---

1. A. B. C. सत्यकिः

भ्युदयादिवर्णनं, वनविहारजलक्रीडामधुपानमानापगमरतोत्स्वादिवर्णनमिति ।

उभयवैचित्र्यं यथा–रसानुरूपसंदर्भत्वं, अर्थानुरूपछन्दस्त्वं, सम-

युद्धं यथा-रामरावणयोः । चतुरङ्गयुद्धं यथा कुरुपाण्डवानाम् । विषमो यथा–रामस्य खरदूषणत्रिशिरोभिः सह ।

चतुर्दशसहस्राणि चतुर्दश च राक्षसाः ।
हतान्येकेन रामेण मानुषेण पदातिना ॥६१६॥ इति । [ ]

समविषमो यथा—महेश्वरार्जुनयोः **किरातार्जुनीये**, रघुमघोनोर्वा **रघुवंश** इति । **अभ्युदय**स्त्रिधा—अरिविजयः, स्त्रीलाभः, पुत्रोत्पत्तिः । तत्रारिविजयो द्विधा-शत्रूच्छेदेन, तदुपनत्या च । स पूर्वो **रावणवधादौ** द्वितीयो **हरिविजयादौ** । स्त्रीलाभो यथा—इन्दुमतीस्वयंवरे पुत्रलाभो दिलीपस्य **रघुवंश** इति ।

**वनविहारे**त्यादिना सोद्दीपनविभावस्य सम्भोगशृङ्गारस्योपदेशात् । मन्त्रदूतप्रयाणसङ्ग्रामाभ्युदयादिभिस्तानर्थानधिगम्य तस्तैर्विलासविशेषैः कामसेवया तदुपयोगः कर्तव्य इति शिक्षयति । तत्र वनविहारो द्विधा मृगयादिः, पुष्पावचायादिश्च । तत्राद्यो यथा—दशरथस्य **रघुवंशे** । द्वितीया यथा–यदूनां **शिशुपालवधे**, अप्सरसा वा **किरातार्जुनीय** इति । **जलक्रीडा** द्विधा-एकस्य वा बह्वीभिः स्वयोषाभिर्बहूनां वा बह्वीभिर्यथास्वमङ्गनाभिः । तत्राद्या यथा—कार्तवीर्यस्य नर्मदायाम्, कुशस्य वा सरय्वाम् । द्वितीया यथा-अप्सरसां सिद्धसिन्धौ, यदूनां वा रैवतकह्रद इति । **मधुपानं** द्विधा-गोष्ठीगृहे, वासभवने च । तत्राद्य **हरिविजये शिशुपालवधे** च । द्वितीय **किरातार्जुनीये कुमारसंभवे** च । **मानापगमो** द्विधा-प्रायत्निकः, नैमित्तिकश्च । प्रायत्निका **हरिविजये** सत्यभामायाः । नैमित्तिका रामाल्लङ्कानिशाचरीणां **सेतुबन्धे** । **रतोत्सवो**ऽपि । द्विधा-सामान्यत विशेषतश्च । सामान्यतः **किरातार्जुनीये शिशुपालवधे**[1] च । विशेषतः **कुमारसंभवे जानकीहरणे** च ।

**रसानुरूपसन्दर्भत्व**मिति । अनेन रतिप्रकर्षे कोमलः, उत्साहप्रकर्षे प्रौढः, क्रोधप्रकर्षे कठोरः, शोकप्रकर्षे मृदुः, विस्मयप्रकर्षे तु स्फुटः शब्दसन्दर्भो विरचनीय इत्युपदिशन्—

---

1. A. drops शिशुपालवधे च । विशेषतः

स्तलोकरञ्जकत्वं, सदलङ्कारवाक्यत्वं, देशकालपात्रचेष्टाकथान्तरानुषञ्जनं, मार्गद्वयानुवर्तनं चेति ।

(183) नैकमोजः प्रसादो वा रसभावविदः कवेः [ ]
इति ख्यापयति ।

अर्थानुरूपच्छन्दस्त्वमिति । अनेन शृङ्गारे द्रुतविलम्बितादयः, वीरे वसन्ततिलकादयः, करुणे वैतालीयादयः, रौद्रे स्रग्धरादयः, सर्वत्र शार्दूलविक्रीडितादयो निबन्धनीया इत्युपदिशति ।

समस्तलोकरञ्जकत्वमिति । अनेनालौकिकतां परिहरन् प्रीतिनिबन्धन[1]स्य प्रबन्धस्य[2] लोके प्रतिष्ठया प्रयासवैयर्थ्यमपाकरोति ।

सदलङ्कारवाक्यत्वमिति । अनेन यद्यप्युपात्तलक्षणानां गुणानामलङ्काराणां च स्वरूपसांकर्येणैव काव्यशोभाकरत्वं तथाप्यलङ्कारवर्गैवनं भारं भूयसा उद्वोढुमलमित्येतदुपर्युपदेशेनोपपादयति ।

देशेत्यादिना परिपूर्णाङ्गेऽपि संविधानके देशकालाद्यविरोधेन तद्वर्णनादिकं निर्दिशति । तत्र देशान्तरानुषञ्जनं यथा--

मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः ।
भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥६१७॥
[शि. व. स. ४. श्लो. १० ]

कालान्तरानुषञ्जनं यथा—

सपदि हरिसखैर्वधूनिदेशाद्ध्वनितमनोरमवल्लकीमृदङ्गैः ।
युगपदनुगुणस्य संनिधानं वियति वने च यथायथं वितेने ॥६१८॥
[ कि. अ. स. १०. श्लो. १८ ]

पात्रान्तरानुषञ्जनं यथा—

करिष्यसे यत्र सुदुष्कराणि प्रसत्तये गोत्रभिदस्तपांसि ।
शिलोच्चयं चारुशिलोच्चयं[3] तमेष[4] क्षणान्नेष्यति गुह्यकस्त्वाम् ॥६१९॥
[ कि. अ. स. ३. श्लो. २९ ]

चेष्टान्तरानुषञ्जनं यथा--

मदस्रुतिश्यामितगण्डलेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा नागा नगोच्छ्रायमिवाक्षिपन्तः ॥६२०॥
[ कि. अ. स. १६. श्लो. २ ]

---

1. °निबन्धस्य 2. A. B. drop प्रबन्धस्य

3. C. drops चारुशिलोच्चयं 4. C. तामवक्षणान्ने°

तत्र संस्कृतभाषानिबद्धसर्गबन्धं **हयग्रीववधादि,** प्राकृतभाषानिबद्धाश्वासकबन्धं **सेतुबन्धादि,** अपभ्रंशभाषानिबद्धसंधिबन्धं **अब्धिमथनादि,** ग्राम्यापभ्रंशभाषानिबद्धावस्कन्धकबन्धं **भीमकाव्यादि ।** प्रायोग्रहणात् संस्कृतभाषयाऽप्याश्वासकबन्धो **हरिप्रबोधादौ**[4] न दुष्यति । प्रायोग्रहणादेव **रावणविजयहरिविजयसेतुबन्धे**ष्वादितः समाप्ति-

---

**कथान्तरानुषङ्गं यथा—**

कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।

शृणु येन गतः[1] स कर्मणा शलभत्वं हरलोचनार्चिषाम् ॥६२१॥

[ कु. सं. स. ४. श्लो. ४० ]

**मार्गद्वयानुवर्तन**मिति । अनेन महाकवीनां समयमुपलक्षयति । तत्र-

(184) गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।

निराकरण[2]मित्येष मार्गः प्रकृतिसुन्दरः ॥

(185) वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।

तज्जयान्नायकोत्कर्षकथनं च धिनोति नः[3] ॥ इति ।

[ का. द. परि. १. श्लो. २१-२२ ]

अथ किमेतानि नगरार्णववर्णनादीनि समुच्चयप्रयोज्यानि, उत विकल्पप्रयोज्यानि । समुच्चयप्रयोज्यानीति चेत्, **किरातार्जुनीयादौ** नगरार्णवार्कोदयविवाहकुमाराभ्युदयादीनामभणनम् । अथ विकल्पेन यथेष्टकल्पनायामलक्षणत्वप्रसङ्गः, तत्र, अङ्गकल्पनस्योभयथापीष्टत्वात्, यदा कथाशरीरस्य परिपूर्णाङ्गसंभवस्तदा समुच्चयेन । यदा त्वन्यथा तदा विकल्पेनेति । तत्रापि केषाञ्चिदेवाङ्गानां विकल्पोऽपरेषां नियमेन प्रयोगः । यानि पुरुषार्थस्यार्थकामादेरासन्नोपकारीणि तानि नियमतः प्रयुज्यन्ते । यथा—'मन्त्रदूतप्रयाणादिनायकाभ्युदयादयः' [ का. द. परि. १. श्लो. १७ ] यथा च शैलर्तूद्यानगमनजलक्रीडाचन्द्रोदयमधुपानरतोत्सवादयः । तानि च यदि कथाशरीरे न स्युस्तदा कथान्तरानुषङ्गेनापि कर्तव्यानीति प्रचक्षते ।

---

1. C. गति  2. C. निराकरमि°  3. A B. ते

4 N. हरिप्रबन्ध°

पर्यन्तमेकमेव छन्दो भवतीति। गलितकानि तु तत्र कैरपि विदग्धमानिभिः क्षिप्तानीति तद्विदो भाषन्ते।

**२०२) नायकाख्यातस्ववृत्ता भाव्यर्थशंसिवक्त्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ताख्यायिका ॥७॥**

धीरप्रशान्तस्य गाम्भीर्यगुणोत्कर्षात्स्वयं स्वगुणोपवर्णनं न संभवतीत्यर्थावस्यां धीरोद्धतादिना नायकेन स्वकीयं[1] वृत्तं सदाचाररूपं चेष्टितं कन्यापहारसंग्रामसमागमाभ्युदयभूषितं मित्रादिष्वाख्यायते, अनागतार्थशंसीनि च वक्त्रापरवक्त्रार्यादीनि यत्र बध्यन्ते, यत्र चावान्तरप्रकरण-

---

**वृत्तमिति**। वृत्तशब्दः सदाचार एव वर्तते। अत एव **मनुराह**—

(186) न विद्यया केवलया तपसा वापि पात्रता।
यस्य वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम्॥
[ या. स्मृ. अ. १. श्लो. २०० ]

इति तदाह **सदाचाररूपमिति**। **वक्त्रेति**। **वक्त्रशब्देन** वक्त्रप्रकरणं लक्ष्यते। तद्यथा—(187) 'अनुष्टुभि नाद्यात्स्नौ तुर्याद्यो वक्त्रम्' [ छ. शा. अ. ३. सू. ३३ ] इत्यादि। (188) 'नारल्गा नजज्रा अपरवक्त्रम्' [ छ. शा अ. ३. सू. १५ ] (189) 'चगौ षष्ठो जो न्लौ वा पूर्वेऽर्धे परे षष्ठो लआर्या गाथा' [ छ. शा. अ. ४. सू. १ ] इत्येव **छन्दोनुशासने** लक्षितानि। वक्त्रं यथा **हर्षचरिते**—

निजवर्षेहितस्नेहा बहुभक्तजनान्विताः।
सुकाला इव जायन्ते प्रजाः पुण्येन भूभृतः॥६२२॥
[ ह. च. उ. ३. पृ. ८३ ]

**अपरवक्त्रं** यथा—
तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते।
अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम्॥६२३॥
[ ह. च. उ. १. पृ. १८ ]

**आर्या** यथा—
सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे।
विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे॥६२४॥
[ ह. च. उ. ४ पृ. ११९ ]

---

1. J. स्वकीयवृत्तं

समासावुच्छ्वासा बध्यन्ते सा संस्कृतभाषानिबद्धा, अपादः पदसंतानो गद्यं तेन युक्ता। युक्तग्रहणादन्तरान्तरा प्रविरलपद्यनिबन्धेऽप्यदुष्टा आख्यायिका। यथा **हर्षचरितादिः**।

**२०३) धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा ॥८॥**

आख्यायिकावन्न स्वचरितव्यावर्णकोऽपि तु धीरशान्तो नायकः,[1] तस्य तु वृत्तमन्येन कविना वा[2] यत्र वर्ण्यते, या च काचिद् गद्यमयी यथा **कादम्बरी**, काचित्पद्यमयी यथा **लीलावती**, या च सर्वभाषा काचित् संस्कृतेन काचित् प्राकृतेन काचिन्मागध्या काचिच्छूरसेन्या काचित् पिशाच्या काचिदपभ्रंशेन बध्यते सा कथा।

प्रबन्धमध्ये परबोधनार्थं नलाद्युपाख्यानमिवोपाख्यानमभिनयन् पठन् गायन्[3] यदेको ग्रन्थिकः कथयति तद्गोविन्दवदाख्यानम्।

तिरश्चामतिरश्चां वा चेष्टाभिर्यत्र कार्यमकार्यं वा निश्चीयते तत्पञ्चतन्त्रादिवत्, धूर्तविटकुट्टनीमतमयूरमार्जारिकादिवच्च निदर्शनम्।

---

**उपाख्यानमिति**। यदाह—

(190) नलसावित्रीषोडशराजोपाख्यानवत्प्रबन्धान्तः।
अन्यप्रबोधनार्थं यदुपाख्यातं ह्युपाख्यानम्॥

**आख्यानमिति**। तथा चाह—

(191) आख्यानकसंज्ञां तल्लभते यद्यभिनयन् पठन् गायन्।
ग्रन्थिक एकः कथयति गोविन्दवदवहिते सदसि॥

**निदर्शनमिति**। तथा च—

(192) निश्चीयते तिरश्चामतिरश्चां वापि यत्र चेष्टाभिः।
कार्यमकार्यं वा तन्निदर्शनं पञ्चतन्त्रादिः॥

---

1. P. नायकस्य and drops तस्य   2. I. सा

3. N. यदैको

प्रधानमधिकृत्य यत्र द्वयोर्विवादः सार्धप्राकृतरचिता चेटकादिवत् प्रवह्लिका[1]।

प्रेतमहाराष्ट्रभाषया क्षुद्रकथा गोरोचना–अनङ्गवत्यादिवन्मन्थल्लिका[2]। यस्यां पुरोहितामात्यतापसादीनां प्रारब्धानिर्वाहे उपहासः सापि मन्थल्लिका।

यस्यां पूर्वं वस्तु न लक्ष्यते पश्चात्तु प्रकाश्यते सा मत्स्यहसिता–दिवन्मणिकुल्या[3]।

एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनप्रधाना शूद्रकादिवत् परिकथा।

---

(193) धूर्तविटकुट्टनीमतमयूरमार्जारिकादि यल्लोके।
कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि॥

प्रवह्लिकेति। तथा च–

(194) यत्र द्वयोर्विवादः प्रधानमधिकृत्य जायते सदसि।
सार्धप्राकृतरचिता प्रवह्लिका चेटकप्रभृतिः॥

मन्थल्लिकेति। तथा च–

(195) क्षुद्रकथा मन्थल्ली प्रेतमहाराष्ट्रभाषया भवति।
गोरोचनेव कार्या सानङ्गवतीव वा कविभिः॥

सापीति। तथा च–

(196) यस्यामुपहासः स्यात्पुरोहितामात्यतापसादीनाम्।
प्रारब्धानिर्वाहे सापि हि मन्थल्लिका भवति॥

मणिकुल्येति। तथा च–

(197) मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु।
पश्चात्प्रकाशते सा मणिकुल्या मत्स्यहसितादिः॥

परिकथेति। तथा च–

(198) पर्यायेण बहूनां यत्र प्रतियोगिनां कथाः कुशलैः।
श्रूयन्ते शूद्रकवज्जिगीषुभिः परिकथा सा तु॥

1. L. प्रवहलिका 2. L. मथलिका 3. L. मानुकुल्या

मध्यादुपान्ततो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्यां वर्ण्यते सा **इन्दुमत्या**दिवत् खण्डकथा। समस्तफलान्तेतिवृत्तवर्णना **समरादित्या**[1]दिवत् सकलकथा। एकतरचरिताश्रयेण प्रसिद्धकथान्तरोपनिबन्ध उपकथा। लम्भाङ्किताद्भुतार्था **नरवाहनदत्तादिचरित**वद् बृहत्कथा। एते च कथाप्रभेदा एवेति न पृथग्लक्षिताः।

**२०४) गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः ॥९॥**

संस्कृताभ्यां गद्यपद्याभ्यां रचिता, अभिप्रायेण यान्यङ्कनानि स्वनाम्ना परनाम्ना वा कविः करोति तैर्युक्ता उच्छ्वासनिबद्धा चम्पूः। यथा **वासवदत्ता दमयन्ती** वा।

**२०५) अनिबद्धं मुक्तकादि ॥१०॥**

मुक्तकसंदानितकविशेषककलापककुलकपर्याकोशप्रभृत्यनिबद्धम्।

---

**खण्डकथेति**। तथा च—

(199) ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः।
मध्यादुपान्ततो वा सा खण्डकथा **यथेन्दुमती** ॥

**सकलकथेति**। चरितमित्यर्थः।

**उपकथेति**। तथा च—

(200) यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबध्यते कविभिः।
चरितं विचित्रमन्यत्सोपकथा **चित्रलेखा**दिः ॥

**बृहत्कथेति**। तथा च—

(201) लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया।
नरवाहनदत्तादेश्चरितमिव **बृहत्कथा** भवति ॥

॥ इति **आचार्यश्रीहेमचन्द्रविरचिते विवेके**ऽष्टमोऽध्यायः ॥

---

1. I. समरादित्यवत्

एषां लक्षणमाह :—

**२०६) एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि ॥११॥**

एकेन च्छन्दसा वाक्यार्थसमाप्तौ मुक्तकं यथा—**अमरुकस्य शृङ्गारशते** रसस्यन्दिनो मुक्तकाः । द्वाभ्यां सन्दानितकम् । त्रिभिर्विशेषकम् । चतुर्भिः कलापकम् । एतानि च विशेषानभिधानात् सर्वभाषाभिर्भवन्ति ।

**२०७) पञ्चादिभिश्चतुर्दशान्तैः कुलकम् ॥१२॥**

छन्दोभिरिति वर्तते । मुक्तकानामेक[1]प्रघट्टकोपनिबन्धः पर्या । अवान्तरवाक्यसमाप्तावपि वसन्ताद्येकवर्णनीयोद्देशेन मुक्तकानामुपनिबन्धः पर्या । सा कोशेषु प्रचुरं दृश्यते ।

**२०८) स्वपरकृतसूक्तिसमुच्चयः कोशः[2] ॥१३॥**

[3]यथा **सप्तशतकादिः** । एकप्रघट्टके एककविकृतः सूक्तिसमुदायो **वृन्दावनमेघदूतादिः** संघात. । विप्रकीर्णवृत्तान्तानामेकत्र सन्धानं **यदुवंशदिलीपवंशादिवत्** संहिता । एवमनन्तोऽनिबद्धगणः । स आदिग्रहणेन गृह्यते ।

इह च सत्सन्धित्वं शब्दार्थवैचित्र्ययोगश्च महाकाव्यवदाख्यायिकाकथाचम्पूष्वपि द्रष्टव्यः ॥

**इति–आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ अष्टमोध्याय. समाप्तः ॥**

1. L °नामेव

2. N. does not regard this as a Sutra. P. L and J. regard it as a Sutra because it is preceded by a ठ

3. L drops यथा and त

# अकाराद्यनुक्रमेण–अलङ्कारचूडामणिगतानां विवेकगतानां चोदाहरणानामनुक्रमणिका।


अइ दिअर (अ). ५६८. ३६८.[2]
[स. श. ५७१; गा. स. श. ६. ७०]
अकलङ्कय शकांकां (वि.) ८५८. २९८.
अकलिततपस्तेजो (अ) २७०. २२०.
[म. च अं. २ श्लो. ३०]
अकालसन्ध्यामिव (अ.) ५३२. ३४९.
[कु. सं. स. १. श्लो. ४]
अकुण्ठोत्कण्ठ (अ.) ४२३. २९०
अखण्डमण्डल (वि.) ५३७. ३३०
अगस्त्यचुलको (वि.) २२१. १८१.
अगा गां गाङ्ग (अ.) ४६५. ३०९
अगूढहासस्फुट (अ.) ६२५. ३८६.
[कि. स. ८. श्लो. ३६]
अग्रादपि मध्या (वि.) ४२६. २८२.
अघौघं नो (अ.) १८०. १५७.
अङ्काधिरोपित (वि.) १०२. २९
[शि. व. स. २ श्लो. ५३.]
अङ्गं चन्दनपंक (वि.) २३. ११.
[पद्यकादम्बरी]
अङ्गराज सेनापते (वि.) ३६०. २४९.
[वे. सं. अं. ३. पृ. ८०]
अङ्गानि चन्दन (वि.) ४२९. २८३.
अङ्गुलीभिरिव (अ.) १६५. १४९.
[कु. सं. स. ८. श्लो. ६३]
अचिराभामिव (अ.) ५३४. ३५९.
अच्छुरवण्डि (अ.) ३३४. २४०.
अजित्वा सार्णवा (अ.) ११३. ११८.
[का. द. परि. २ श्लो. २८४]
अज्ज विहरी (वि.) १५९. ९९.
अज्ञानाद्यदि (वि.) ४१९. २८०.
[ह. ना. अं. ७ श्लो. ४४]
अट्टहासच्छले (वि.) ८०. २५.
अतथ्यान्यपि (वि.) ३१. १३.
[व्यासस्य]
अतन्द्रचन्द्रा (अ.) ६३. ६८.
अतिथि नाम (अ.) २८२. २२५.
[र. व. स. १७ श्लो. १]
अत्ता एत्थ (अ.) १४. ५३.
[गा. स. ७. ६७; स. श. ६३९]
अत्युच्चपदाध्यासः (अ.) ५४८. ३५४.
अत्रान्तरे किम (अ) ७२४. ४२५.
[मा. मा. अं. १, श्लो. २९.]
अत्रान्तरे रणित (वि.) ४३३. २८४.
[वि. शा. भ. अं. १ श्लो. ३९]
अत्रावदातद्युति (वि) २६३. १८९.
अत्रोपचारः (वि.) २७६. १९०.
अथ जयाय (अ.) ६२६. ३८७.
[कि स. ५, श्लो. १.]
अथ पथि (वि.) १२०. ३२.
[र. व. स. ११. श्लो ९३.]
अथ भूतानि (अ.) २२३. २०७.
अथ स ललित (वि) ५८६. ४५०.
[कु. सं. स. ३. श्लो. ६४]


१. अस्यामनुक्रमणिकायां (अ) अलङ्कारचूडामणिं (वि.) च विवेकं सूचयति.

२. प्रथमा संख्या श्लोकाङ्कं सूचयति, अपरा पृष्ठाङ्कम्।

अदादिन्द्राय (अ). ३९६. २६६.
अदृश्यन्त पुर (अ.) ६३८. ३९१.
अद्यैवावां रण (वि.) ५९०. ४५१.
[ वे. सं. अ. ४. श्लो. १५. ]
अधरदलं ते (अ.) ४९१. ३३१
[ रुद्रट का. लं. अ. ४ श्लो. २० ]
अधरे बिन्दु (वि.) २१. ११.
[ कु. म. श्लो. ४०३. ]
अधिकरतल (अ.) २३३. २८९.
अनङ्गः पञ्चभिः (अ.) १५३. १४२.
अनङ्गमङ्गल ३३३. २४०.
अनङ्गरङ्ग (अ.) ४३०. २९५.
अनङ्गलङ्घनालग्न (वि.) ४८४. ३०९.
[ का. द. परि. ३ श्लो. ९० ]
अनणुरणन्मणि (अ) ३७१. २६२.
[ रुद्रट का. लं. अ. २. श्लो. २३ ]
अनध्यवसिता (वि.) ५५३ ३६३.
[ धर्मकीर्तेः ]
अनवरतनयन (वि.) ४२७. २८२.
अनाधिव्याधि (अ.) ५०६. ३४३.
अनुत्तमानुभावस्य (अ.) ३६६. २६०.
अनुरागवती (वि) ५३:. ३२९.
अन्त्रप्रोतबृहत (अ.) ३३८. २४०.
[ म. च. अं. १. श्लो. ३५ ]
अन्त्रैः कल्पित (वि.) १८९. १६८.
[ मा. मा. अं. ५. श्लो. १८ ]
अन्नत्थ वच्च (अ.) ८५. ८५.
अन्नं लडहत्तणयं (अ.) ५६९. ३६८.
अन्यत्र यूय (अ) ३३. ६१.
अन्यत्र व्रज (अ.) ७१६ ४२०.
अन्ययान्यवनिता (अ) ६३३. ३८५.
अन्यास्ता गुण (अ.) २५२. २१४.
अपङ्किलतटा (वि.) २७०. १९०.
अयमहिमरुचि (वि.) ४५४. २८८.
अपाङ्गतरले (अ.) ५७१. ३६९.
अपि क्वाचिच्छ्रुता (वि.) १३१. ३६.
अपूर्वमधुरा (अ.) ३९१. २६६.
अप्यवस्तुनि (अ) ५५. ६६.
[ कु सं. स. ८ श्लो. ६ ]
अप्यसज्जन (अ.) ५९३. ३७४.
अभिधाय तदा (अ.) २६७. २६०.
[ शि व स. १६. श्लो. २. ]
अभिनवकुश (वि.) ३३०. १९८.
अभिनववधू (वि.) २९१. १९२.
[ औ. वि. च. पृ १३३. मालवरुद्रस्य सु. हारावली. भासस्य ]
अमी ये दृश्यन्ते (वि) ५४४. ३५९.
अमुं कनक (अ) ८०. ८१.
[म. भा. शा. प. अ. १५२. श्लो. ६५]
अमृतममृतं (अ.) २५१. २१४.
अयं जनः (वि.) ३४८. २२१.
[ कु. स. स. ५. श्लो. ४० ]
अयमपि पट्ट (अ.) २१२. २०४.
[ वि. अं. ४. श्लो. १ ]
अम्भोजगर्भ (वि.) ६०४. ४५४.
[ र. अं. ४. श्लो. १ ]
अयमेकपदे (अ.) ८६. ८५.
[ वि. अं. ४. श्लो. ३. ]
अयं पद्मासना (अ.) ३२७. २३८.
अयं प्रसूनो (वि.) २९७. १९३.
अयं मार्तण्डः (अ.) ६३७. ३८७.

अयं स भुवनः (वि.) १२४. ३३.
अयं स रसनो (अ.) १७२. १५२.
[ म. भ. स्त्री. प. अ. २४. श्लो. १९ ]
अयि जीवित १११. ११६.
[ कु. स. म. ४ श्लो. ३ ]
अयि दियर (अ.) ५६८. ३६८
[ स. श. ५७१; गा. स. श. ६७० ]
अयि पश्यसि (अ.) २४८. २१४.
अरण्ये निर्जने (वि) ४६. १७.
अरातिविक्रम (अ.) ५१५. ३४५.
अर्चिर्निशया (वि.) ५७४. ४८२.
अरे रामाहस्ता (अ.) ४१९. २७२.
अर्पितवे प्रकटी (अ.) ३७०. २६२.
[ म. च. अं. २. श्लो ९. ]
अलमलमतिमात्रं (वि.) ६०३. ४५४.
[ र. अं. ३. श्लो. ९७ ]
अलसलुलित (अ.) १४३. १३७.
[ उ. रा. च अ. १ श्लो. २४ ]
अलसवलितै (अ) २०३. २००.
[ अ. श. श्लो. ४ ]
अलंकारः शङ्का (अ) ४७८. ३२४.
अलंकृत जटा (वि) १२७ ३५.
अलं स्थित्वा (अ.) ७८. ८१.
[म. भा. शा प. अ. १५२ श्लो. ११ (a)
१२ (a) ]
अलिकुलकुन्तल (अ.) ५४३. ३५३.
[ ह का ८. ४५ ]
अलिनीलालक (वि.) ४८५. ३१०.
[ का. द. परि. ३ श्लो. ८१ ]
अलिमिरञन (अ.) २२६. २०७.
[ र. वं. स. ९ श्लो. ४१ ]
अलिवलयैरलकै (अ.) ५२१. ३४७.
[ ह. का. ८-३० ]
अलोलकमले (अ.) ४९३. ३३१.
[ दे श. श्लो. ७४ ]
अलौकिकमहा (वि.) ५३५. ३३०.
अवन्तिनाथां (वि.) ३५६. २८९.
अवितथमनां (वि.) ५३९ ३४२.
अविरलकमल (वि.) ५७०. ३९७.
अविरलकरवाल (वि) १८१. १५३.
अवीनादौ (वि) ३६. १५.
असूच्यत शरत् (वि.) ३२७ १९७.
असतामहितो (वि.) ४७६. ३०६.
असंतोषादिवाकृष्ट (अ) ५२८. ३४८.
असशयं क्षत्र (अ.) १२४. १३०.
[ अ. शा अं. १ श्लो. १९ ]
असावुदयमारूढः (अ.) ४८६ ३२८.
[ का. द. परि. २. श्लो. ३११ ]
असिमात्रसहायां (अ) ६१७. ३८३.
असोढा तत्कालो (वि) १८३. १५३.
असौ मरुच्चुम्बित (अ.) ३५७. २४७.
[ ह. ना. अं. ६. ]
अस्युत्तरस्यां (वि.) २३६. १८५; ४०९.
२७८. [ कु. सं. स. १ श्लो. १ ]
अस्मद्भाग्य (अ.) ४३. ६४.
अस्माकमद्य (अ.) २९६. २२९.
अस्मान्साधु (अ.) १४२. १३६.
[ अ. शा. अं. ४, श्लो. १६ ]
अस्मिन्नह्नीहि (वि.) ५७८. ४०४.
[ भामहालंकार परि. ३. श्लो. ५६ ]
अस्मिन्नेव लता (अ.) १०४. ११२.
[ उ. रा. च. अं. ३ श्लो. ३८ ]

अहयं उज्जुअ (अ.) १७५. १५५.
[ गा. स. २. २७; स. श. १२७ ]
अहमेव गुरुः (अ) ५८३. ३७२.
अहंकारेण (अ.) ४१०. २७०.
अहं त्वा यदि (अ.) ५७९. ३७१.
अहिणवमणहर (अ.) २२८. २०७.
अहो गीतमहो (अ.) १९०. १६३.
[ ना. अ. १. पृ. १० ]
अहो महेश्वरस्यास्य (अ). ४८. ६५.
अहो विडम्बयत्येषा (अ.) ६२१. ३८४.
अहो विशालं (अ) ६०३. ३७६.
[ का. द. परि. २ श्लो. २१९ ]
अहो संसार (अ.) ५५८. ३६४.
आकम्पितक्षितिभृता (वि.) २१९. १८०.
आकाशयानतट (वि.) २०४ १७५.
आक्षिपन्त्यरविन्दानि (अ.) ६६५. ३९९.
[ का द. परि २ श्लो. ३६१ ]
आगच्छागच्छ (वि.) १६९. १४१.
[ वनिकस्य द. रू प्र. ४. सू २८ ]
आगममणिमुदम (वि.) १३२ ३२७.
[ दे. श. श्लो ७९ ]
आच्छिद्य प्रियतः (वि) ३९ १५.
आज्ञा शक्रशिखा (अ) ८. ३९
[ बा. रा. अं. १ श्लो. ३६ ]
आतन्वत्सरसां (वि.) २०. १०.
आत्ममात्मधिकान्त (वि.) १६०. १०४.
आत्मनश्च परेषां (अ) ४८२. ३२७
आदाय कर्ण (अ) ६३२. ३८९
आदाय चापमचलं (वि) ५३६. ३३०.
आदाय वारि (अ) ५६२. ३६५.
[ औ. वि च. का. २०. पृ. १३९ भोजेन्दुराजस्य ]
आदावञ्जनपुञ्ज (अ.) २०२. २००.
आदित्योऽयं (अ.) ७९. ८१.
[ म. भा. शा. प. अ. १५२. श्लो. ९९]
आननेनाकलङ्केन (अ.) ६२० ३८३.
आनन्दममन्द (अ) ५९९. ३७५.
[ रु. का. ९. ४७ ]
आनन्दसदोह (वि.) ५९. २०.
आपातमारुत (वि.) १०५. २९.
आपृष्टासि व्यथयति (अ.) १६२. १४८.
आमूलयष्टेः फणि (वि.) २२४. १८१.
आयस्ता कलह (अ) ७०५. ४१७.
[ अ. श. श्लो. १०६ ]
आयाते दयिते (अ.) १३७. १३४.
[ सुभाषितावली २०७५ अद्भुतपुण्यस्य ]
आयुर्घृत नदी पुण्य (वि.) ५६९. ३९७
आर्द्रावले व्रज (वि.) २०८, १७५.
आर्यस्याज्ञ (वि.) ३२. १३.
[ कनकजानकी ]
आलिख्य पत्र ६९. २०.
आलिङ्गितः स तवाङ्गया (अ.)३३३. २४०.
आलोकमार्गं (अ.) १३२. १३३; (वि.) ३७६. २५२. [ र. वं. स. ७ श्लो. ६; कु. सं स ७ श्लो. ५७ ]
आलोकामलकावलीं (अ.) ७३७. ४२९.
[ अ. श. श्लो. ३ ]
आवर्जिता किंचिदिव (अ.) ५३३. ३४९.
[ कु. स. स ३, श्लो. ५४ ]
आवर्तशोभी (वि.) २६. १२.
[ अमृततरङ्गकाव्य ]
आशु लङ्घितवती (अ.) ३१०. २२४.
[ शि व. स. १०, श्लो. ६४ ]

अश्लिष्टभूमि (अ) १५०. १३९.
[ शि. व. स. ३. लो. ७२ ]
आश्लेषिणः पृथु (वि.) २८५. १९२.
आश्लेषे प्रथमं (वि) १७२. १४६
आसमुद्रक्षितीशानां (वि). ३८२. २५३.
[ र. व. स. १ श्लो. ५ ]
आसाद्यं (अ.) १६. ५४.
[ स. श. ९५८ ]
आसीदस्ति भविष्यतीह (वि.) ७३ २३.
आसीद्दैत्यो हयग्रीवः (वि.) ११६. ३१.
[ हयग्रीववध ]
आसीदञ्जनमत्रेति (वि.) ५७५. ४०३.
आसीन्नाथ पितामही (वि.) ५५४. ३८१.
आस्तीकोऽस्ति (वि.) २१०. १७६.
आस्थानकुट्टिम (वि.) ८३. २५.
आहृत कुचतटे (वि.) ४१३. २७९.
[ शि. व. स. १०. श्लो. ७४ ]
आहूतस्याभिषेकाय (अ.) ६८३. ४०९.
आहूतेषु विहंग (अ.) २३०. २०८.
[ भल्लट. श. श्लो. ६९ ]
इतस्ततो भषन भूरि (वि.) ६१५. ४५७
[ ह. वि. ]
इतः स दैत्यः (अ.) ५३. ६५.
[ कु. सं. स. २. श्लो. ५५ ]
इति विक्रमति (वि.) २०३. १७४
इतों वसति केशवः (अ.) ५६५. ३६७.
[ भ. नी. श. श्लो. ६७ ]
इदं ते केनोक्तं (अ.) ४०३. २६७.
इव भासां भर्तुं (वि.) २४२. १८५.
इन्द्रस्त्वं तव बाहू (अ.) ५४०. ३५२.
इयं गेहे लक्ष्मी (अ.) ६९०. ४१९.
इयं सा लोलाक्षी (वि.) १८८. १६८.
ईदृशस्य भवतः (वि.) ४१५ २७९.
[ शि. व. स. १०. श्लो. ७७ ]
ईषन्मीलित (अ.) ७३०. ४२७.
ईसाकलुसस्स (वि.) १४५. ७६.
उच्चिणसु (अ.) ७०. ५५.
[ स. श. ९५९ ]
उत्कण्ठा परितापो (अ.) ६४०. ३९२.
[ ह. का. ल. अ. ७, श्लो. ५५ ]
उत्कम्पिनी भय (अ.) ८९. ८३.
उत्कृत्योत्कृत्य (अ.) ११५. ११९; १३९.
१३५ [ मा. मा. अं. ५. श्लो. १६ ]
उत्खातनिर्मल (वि.) ८७. २५.
उत्तानोच्छून (अ.) ३०४. २३१.
उत्तालताडको (अ.) ६७७. ४०७.
[ म. च. अं. १. श्लो. ३७ ]
उत्तिष्ठन्त्या रतान्ते (अ.) ७३६. ४२९.
(वि) ३५५. २४८.
[ वे. सं. अं. १. श्लो. ३ ]
उत्पक्ष्मणो (वि.) १७१. १४५.
[ अ. शा. अं. ४. श्लो. १४ ]
उत्पत्तिर्जमदग्नितः (अ.) ६८६. ४०९.
[ म. च. अं. २. श्लो. ३६ ]
उत्फुल्लकमल (अ.) २६६. २१९.
[ नागानन्द अं. १. श्लो. १३ ]
उत्सिक्तस्य तपः (अ.) १२०. १२८.
[ म. च. अं. २. श्लो. २२ ]
उदयति विततोर्ध्व (अ.) ५७६. ३७०.
[ शि व. स. ४. श्लो. २० ]
उदयोर्वीभृत एष (वि.) ५९८. ४५३.
[ र. अं. ३. श्लो. १२ ]

उदन्वच्छिन्ना भूः (अ.) २६४. २१८.
[ वा. रा. अं. १, श्लो. ८ ]
उदाररचना (वि.) ४५७. २९८.
उदितोत्साद (वि.) ६९४. ४१४.
[ शि. व. स. ९. श्लो. ७७ ]
उदीच्यच्छानिल (वि.) २८९. १९२.
उदेति सविता (अ). ४४४. २९९.
[ सुभा. २२० ]
उद्दण्डोदर पुण्डरीक (वि.) ६७. २२.
उद्दामोत्कलिकां (अ) ५. ३८.
[ र. अं. २. श्लो. ४ ]
उद्देशोऽयं सरस (अ.) ३०. ६०.
उद्धृतैर्निभृतमेक (अ.) ६९८. ४१५.
[ शि. व. स. १०. श्लो. ७६ ]
उद्यता जयिनि (वि.) ३४०. २१०.
उद्यो दीघिका (अ.) ३१२. २३५.
उद्यानानां मूकपुंस्कोकिलत्वं (वि.) २७९. १९१
उन्नतः प्रोलसद्धारः (अ.) ६२. ६८.
उन्मज्जन्मकर (अ.) २०५. २०१.
[ कि. स. १७. श्लो. ६३ ]
उपपन्नं ननु (वि.) ३६५. २५१.
[ र. वं. स. १. श्लो. ६० ]
उपरि घनं (अ.) ५४५. ३५४.
उपपरिसरं गोदावर्या (अ) ४०४. २६८.
उप्पह जायाए (वि.) ५४७. ३६०.
उपानयन्ती कलहंस (वि.) २६१. १८९.
उपोढरागेण (अ.) ६०९. ३७८.
[ ध्व. उ. १. पृष्ठ ५३ (पाणिनेः) ]
उभौ यदि व्योम्नि (अ.) ५२५. ३४७.
[ शि. व. स. ३. श्लो. ८ ]
उरसि निहित (अ.) ७१८. ४२१.
[ अ. श. श्लो. ३१ ]
उर्वशी ह्यप्सराः (वि.) ४. ७.
[ श. ब्रा. का. ११. अ. ५. ब्रा. १ ]
उषःसु बहुराकृष्ट (वि.) २७१. १९०.
उष्णिहीव संसृतौ ( वि ) ३. ७
[ छ. शा. अ. २. सू. ४८ ]
ऊरुद्वन्द्वं सरस (वि.) ५०. १८.
ऊरुद्वय कदली (वि.) ५१. १८.
ऊर्ध्वाक्षिताप (वि.) ३९५. २५७.
ऋजुतां नयत (अ.) ६१२. ३८१.
[ कु. सं. स. ४ श्लो. २३ ]
एकत्तो रुअइ (वि.) १८७. १६८.
एकत्रासनसंगते (अ.) ६९१. ४१३
[ अ. श. श्लो. १९ (?) ]
एकः शङ्कामहिवर (वि.) ३३८. २०४.
एकत्रिधा वचसि (वि.) ५७२. ४०२.
एकस्मिञ्शयने (अ.) ९८. १०८.
[ अ. श. श्लो. ८३ ]
एकस्यामेव तनौ (अ) ५८४. ३७३.
[ रु. का. ९. ३७ ]
एकं ज्योतिर्दृशौ (वि.) २३१. १८४.
[ सु. श. श्लो. १३ ]
एकं ध्याननिमीलनाद् (वि.) १९०. १६८
एकाकिन्यपि (अ.) २६. ५९.
[ क. व. स. ५०० विद्यायाः ]
एकेनाक्ष्णा (वि). १९१. १६९.
[ सुभा. १३१६. चन्द्रकस्य ]
एण्यः स्थलीषु (वि.) ३१२. १९५.
एतत्सुन्दरि (वि.) ९८. २८.
एतासां राजति (अ.) २४९. २१४.

